॥ श्री ॥

# अथजीवन्मुक्तिविवेकः

## श्रीविद्यारण्यविरचितः

वाराणसीप्रसादस्य नियोगेन प्रयत्नतः ॥ काशीसंस्कृतमुद्रायामङ्कितोयं शिलाक्षरैः ॥ १ ॥ श्रीकाशीजी मे ज्ञानवापीके पूर्व फाटक पर श्रीविश्वनाथजीके पास महाराज शिवलाल दुबेजीके मकानमे काशीसंस्कृत मुद्रायंत्रमे छपी जिनको लेना होय उनको इसकार्यके संपादक श्रीबाबू वाराणसी प्रसादजीके पास याकचौरी गलीमे भाई प्रताप सिंहजीके दुकान पर मिलैगी ॥ ॥ श्रीशुभम् ॥

संवत् १९३७ चैत्रकृष्ण ५ ॥ २
रविवार तारीख २० माहे मार्च
सन् १८८१ ईशवी ॥
शुभम्

॥श्रीगणेशायनमः॥श्रीगुरुभ्योनमः॥ यस्यनिःश्वसितंवेदा यो-
वेदेभ्योऽखिलंजगत्॥निर्ममेतमहंवंदे विद्यातीर्थमहेश्वरं॥
१॥ॐवक्ष्येविविदिषान्यासंविद्वन्न्यासंचभेदतः॥हेतूविदेह
मुक्तेश्चजीवन्मुक्तेश्चतौक्रमात्॥१॥संन्यासहेतुर्वैराग्यंयदह
र्विरजेत्तदा॥प्रव्रजेदितिवेदोक्तेस्तद्भेदस्तुपुराणगः॥२॥विरक्ति
र्द्विविधाप्रोक्ता तीव्रातीव्रतरेतिच॥सत्यामेवतुतीव्रायांन्यसेद्यो
गीकुटीचके॥३॥शक्तोबहूदकेतीव्रतरायांहंससंज्ञिते॥मुमुक्षुः
परमेहंसेसाक्षाद्विज्ञानसाधने॥४॥पुत्रदारगृहादीनांनाशेतात्
कालिकीमतिः॥धिक्संसारमितीदृक्स्याद्विरक्तेर्मंदताहिसा
॥५॥अस्मिन्जन्मनिमाभूवन्पुत्रदारादयोमम॥इतियासुस्थिरा
बुद्धिःसावैराग्यस्यतीव्रता॥६॥पुनरावृत्तिसहितोलोकोमेमास्तुक
श्चन॥इतितीव्रतरत्वंस्यान्मंदेन्यासोनकोपिहि॥७॥यात्राद्यश
क्तिशक्तिभ्यांतीव्रेन्यासद्वयंभवेत्॥कुटीचकोबहूदश्चेत्युभावे
तौत्रिदंडिनौ॥८॥द्वयंतीव्रतरेब्रह्मलोकमोक्षविभेदतः॥त
त्रलोकेतत्त्वविद्धंसोलोकेस्मिन्परहंसकः॥९॥एतेषांतुसमाचाराः
प्रोक्ताःपाराशरस्मृतौ॥व्याख्यानेस्माभिरत्रायंपरहंसोविविच्यते
॥१०॥जिज्ञासुर्ज्ञानवांश्चेतिपरहंसोद्विधामतः॥प्राहुर्ज्ञानायजि
ज्ञासोर्न्यासंवाजसनेयिनः॥११॥प्रव्राजिनोलोकमेतमिच्छंतःप्र
व्रजंतिहि॥एतस्यार्थस्तुगद्येनवक्ष्यतेमंदबुद्धये॥१२॥लोकोहि
द्विविधः॥आत्मलोकोऽनात्मलोकश्चेति॥तत्रआत्मलोकस्यत्रै
प्रथम
विध्यं बृहदारण्यकेतृतीयाध्यायेश्रूयते॥अथत्रयोवावलोकाम
नुष्य लोकःपितृलोकोदेवलोकइतिसोयंमनुष्यलोकःपुत्रेणैव
जय्योनान्येनकर्मणाकर्मणापितृलोकोविद्ययादेवलोकइति॥
आत्मलोकश्चतत्रैवश्रूयते॥योहवाअस्माल्लोकात्स्वंलोकमदृ
ष्ट्वाप्रैतिसएनमविदितोनभुनक्तीति॥आत्मानमेवलोकमुपासी
तसयआत्मानमेवलोकमुपास्तेनहास्यकर्मक्षीयतइतिच॥यो
मांसादिकपिंडलक्षणात्स्वंलोकंपरमात्माख्यंअहंब्रह्मास्मी
त्यविदित्वाम्रियतेसःस्वलोकःपरमात्माअविदितःअविद्यया

व्यवहितः सन्नेनं अवेत्तारं प्रेतं मृतं न भुनक्ति शोकमोहादिदोषाप
ायनेनेनं न पालयति ॥ उपासकस्य हि निश्चितं कर्म न क्षीयते एकफ
लदानेन उपक्षीणं न भवति कामितसर्वफलं मोक्षं च ददातीत्यर्थः
॥ षष्ठाध्यायेपि ॥ किमर्थं वयमध्येष्यामहे किमर्थं वयं यक्ष्याम
हे ॥ किं प्रजया करिष्यामो येषां नोयमात्मायं लोक इति ॥ ये प्रजा
मीषिरे ते श्मशानानि भेजिरे । ये प्रजां नेषिरे ते ऽमृतत्वं हि भेजि
रे ॥ एवं सति एतमेव प्रव्राजिनो लोकमिछंतः प्रव्रजंतीत्यत्रात्म
लोको विवक्षित इति गम्यते ॥ स वा एष महानज आत्मेति प्रकां
तस्यात्मन एतच्छब्देन परामृष्टत्वात् । लोक्यते ऽनुभूयत इति
लोकः ॥ तथा चात्मानुभवमिछंतः प्रव्रजंतीति श्रुतेस्तात्पर्यार्थः
संपद्यते ॥ स्मृतिश्च ॥ ब्रह्मविज्ञानलाभाय परहंससमाह्वयः ॥ शां
तिदांत्यादिभिः सर्वैः साधनैः सहितो भवेदिति ॥ इह जन्मनि ज
न्मांतरे वा सम्यगनुष्ठितैर्वेदानुवचनादिभिरुत्पन्नया विविदिष
या संपादितत्वादयं विविदिषासंन्यास इति अभिधीयते ॥ अयं
च वेदनहेतुः ॥ संन्यासो द्विविधः ॥ जन्मापादककाम्यकर्मादित्या
गमात्रात्मकः ॥ प्रैषोच्चारणपूर्वकदंडधारणाद्याश्रमरूपश्चेति ॥ पुं
जन्म लभते माता पत्नी च प्रैषमात्रतः ॥ ब्रह्मनिष्ठं सुशीलश्च स्नातं चैत
त्स्वभावतः ॥ त्यागश्च तैत्तिरीयादौ श्रूयते ॥ न कर्मणा न प्रजया धने
न त्यागेनैके ऽमृतत्वमानशुरिति ॥ अस्मिंश्च त्यागे स्त्रियो प्यधिक्रि
यंते ॥ भिक्षुकीत्यनेन स्त्रीणामपि प्राग्विवाहाद्वा वैधव्याद्वूर्ध्वं संन्या
से ऽधिकारो ऽस्तीति दर्शितं ॥ तेन भिक्षाचर्यं मोक्षशास्त्रश्रवणं ए
कांते आत्मध्यानं च ताभिः कर्तव्यं त्रिदंडादिकं च धार्यं ॥ इति मो
क्षधर्मे चतुर्दशटीकायां सुलभाजनकसंवादः ॥ शारीरकभाष्ये
वाचक्नवीत्यादि श्रूयते ॥ देवताधिकरणन्यायेन विधुरस्य अधि
कारप्रसंगत्वेन तृतीयाध्याये चतुर्थपादे ॥ अत एव मैत्रेयीवा
क्यमाम्नायते ॥ येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगव
न्वेत्थ तदेव मे ब्रूहीति ॥ ब्रह्मचारिगृहस्थवानप्रस्थानां केन चिन्नि
मित्तेन संन्यासाश्रमस्वीकारे प्रतिबंधे सति स्वाश्रमधर्मेष्वनुष्ठी

यमानेह्यपिवेदनाख्योमानसःकर्मादित्यागोनविरुध्यते॥श्रुतिस्मृ
तीतिहासपुराणेषुलोकेचतादृशांतत्त्वविदांबहूनामुपलंभात्॥
यस्तुदंडधारणादिरूपोवेदनहेतुःपरमहंसाश्रमःपूर्वैराचार्यैर्बहु
विधाप्रपंचितइत्यस्माभिरुपरम्यते॥इतिविविदिषासंन्यासः॥
अथविद्वत्संन्यासंनिरूपयामः॥सम्यगनुष्ठितैःश्रवणमनननिदि
ध्यासनैःपरतत्त्वंविदितवद्भिःसंपाद्यमानोविद्वत्संन्यासः॥तंच
याज्ञवल्क्यःसंपादयामास॥तथाहिविद्वच्छिरोमणिर्भगवान्याज्ञ
वल्क्योविजिगीषुकथायांबहुविधेनतत्त्वनिरूपणेनाश्वलप्रभृ
तीन्विप्रान्विजित्यवीतरागकथायांसंक्षेपविस्तराभ्यांअनेक
धाजनकंबोधयित्वामैत्रेयींबुबोधयिषुस्तस्यास्त्वरयात —
त्वाभिमुख्यायास्वकर्तव्यंसंन्यासंप्रतिजज्ञे॥ततस्तांबोधयित्वा
संन्यासंचकार.तदुभयंमैत्रेयीब्राह्मणस्याद्यंतयोराम्नायते॥अ
थाहयाज्ञवल्क्योन्यद्वृत्तमुपाकरिष्यन्मैत्रेयीतिहोवाचयाज्ञव
ल्क्यःप्रव्रजिष्यन्वाअरेहमस्मात्स्थानादस्मीतिएतावदरेख
ल्वमृतत्वमितिहोक्त्वायाज्ञवल्क्यःप्रवव्राजेतिच॥कहोलब्रा
ह्मणेपिविद्वत्संन्यासआम्नायते॥एतंवैतमात्मानंविदित्वाब्राह्म
णाःपुत्रैषणायाश्चवित्तैषणायाश्चलोकैषणायाश्चव्युत्थायाथभि
क्षाचर्यंचरंतीति॥नचैतद्वाक्यंविविदिषासंन्यासपरमितिशंक
नीयं॥पूर्वकालवाचिनोविदित्वेतिक्त्वाप्रत्ययस्यब्रह्मविद्वाचिने
ब्राह्मणशब्दस्यचबाधप्रसंगात्॥नचात्रब्राह्मणशब्दोजाति
वाचकः॥वाक्यशेषेपांडित्यबाल्यमौनशब्दाभिधेयैःश्रवण
मनननिदिध्यासनैःसाध्यंब्रह्मसाक्षात्कारमभिप्रेत्याथब्राह्म
णशब्दइत्यभिहितत्वात्॥ननुतत्रविविदिषासंन्यासोपेतःपां
डित्यादौप्रवर्तमानोपिब्राह्मणशब्देनपरामृष्टःतस्माद्ब्राह्म
णःपांडित्यंनिर्विद्यबाल्येन — तिष्ठासेदितिचेत्॥मैवं॥भावि
नींवृत्तिमाश्रित्यतत्रब्राह्मणशब्दस्यप्रयुक्तत्वात्॥अन्यथाक
थंअथब्राह्मणइतिसाधनानुष्ठानोत्तरकालवाचिनमथशब्दं
प्रयुंजीत॥शारीरब्राह्मणेपिविद्वत्संन्यासविविदिषासंन्यासौस्प

ष्टं निर्दिष्टं ॥ एतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमि
च्छंतः प्रव्रजंतीति मुनित्वं मननशीलत्वं तच्चासति कर्तव्यांतरे संभ
वतीत्यर्थात्संन्यास एवाभिधीयते ॥ एतच्च वाक्यशेषेस्पष्टीकृतं ॥
एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयंते किं प्रजया करिष्यामो
येषां नोयमात्मायं लोक इति ॥ ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च
लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरंतीति ॥ अयं लोक इ
त्यपरोक्षेणानुभूयत इत्यर्थः ॥ नन्वत्र मुनित्वेन फलेन प्रलोभ्य वि
विदिषासंन्यासं विधाय वाक्यशेषे स एव प्रपंचितः ॥ अतो न सं
न्यासांतरं कल्पनीयं ॥ मैवं ॥ वेदनस्यैव विविदिषासंन्यासफल
त्वात् ॥ न च वेदनमुनित्वयोरेकत्वं शंकनीयं विदित्वा मुनिर्भवतीति
पूर्वोत्तरकालीनयोः तयोः साध्यसाधनभावप्रतीतेः ॥ ननु वेदनस्यै
व परिपाकातिशयरूपमवस्थांतरं मुनित्वं ॥ अतो वेदनहेतुः पूर्व
संन्यासस्यैवैतत्फलमिति चेत् ॥ बाढं ॥ अत एव साधनरूपात्संन्या
साद्द्वयं फलरूपमेतं संन्यासं ब्रूमः ॥ यथा विविदिषासंन्यासिना
तत्वज्ञानाय श्रवणादीनि संपादनीयानि ॥ तथा विद्वत्संन्यासिना
पि जीवन्मुक्तये मनोनाशवासनाक्षयौ संपादनीयौ एतच्चोपरिष्टा
त्प्रपंचयिष्यामः ॥ सत्यप्यनयोः संन्यासयोरवांतरभेदे परमहंस
त्वाकारेणैकीकृत्य चतुर्विधा भिक्षवइति स्मृतिषु चतुःसंख्योक्ता ॥
पूर्वोत्तरयोरुभयोः संन्यासयोः परमहंसत्वं जाबालश्रुतावगम्यते
तत्र हि जनकेन संन्यासे पृष्टे सति याज्ञवल्क्योधिकारविशेषविधाने
नोत्तरकालानुष्ठेयेन च सहितं विविदिषासंन्यासमभिधाय पश्चाद्वि॰
णाय ज्ञोपवीतरहितस्यात्रिप्रेऽब्राह्मण्ये सति पश्चादात्मज्ञानमेव
यज्ञोपवीतमिति समादधौ ॥ अतो बाह्योपवीताभावात्परमहंसत्वं
निश्चीयते ॥ तथान्यस्मिन्कंडिकायां तत्र परमहंसो नाम संवर्तकारुणि
वर्तकादीन्बहून्ब्रह्मविदो जीवन्मुक्तानुदाहृत्याव्यक्तलिंगाअव्य
क्ताचारा अनुन्मत्ता उन्मत्तवदाचरंत इति विद्वत्संन्यासिनो दर्शिताः
तथा त्रिदंडं कमंडलुं शिक्यं पात्रं जलपवित्रं शिखां यज्ञोपवीतं चेत्ये
तत्सर्वं भूः स्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छेदिति त्रिदंडिनः सतः एक
दंडलक्षणविविदिषासंन्यासं

विधाय तत्फलरूपं विद्वत्संन्यासमेव मुदाजहार॥ यथाजातरूप
धरो निर्द्वंद्वो निष्परिग्रहस्तत्त्वब्रह्ममार्गे सम्यक्संपन्नः शुद्धमान
सः प्राणसंधारणार्थं यथोक्तकाले विमुक्तो भैक्ष्यमाचरन्नुदरपा
त्रेण लाभालाभौ समौ कृत्वा शून्यागारे देवतागृहतृणकूटवल्मी
कवृक्षमूलकुलालशालाग्निहोत्रनदीपुलिनगिरिकुहरकंदर
कोटरनिर्झरस्थंडिलेष्वनिकेतवास्यप्रयत्नो निर्ममः शुक्लध्यान
परायणोऽध्यात्मनिष्ठः शुभाशुभकर्मनिर्मूलनपरः संन्यासेन दे
हत्यागं करोति स परमहंसो नामेति॥ तस्मादनयोरुभयोः परमहं
सत्वं सिद्धं॥ समानेऽपि परमहंसत्वे विरुद्धधर्माक्रांतत्वाद्वांतर
भेदोऽप्यभ्युपगंतव्यः॥ विरुद्धधर्मत्वं चारुण्युपनिषत्परमहंसोप
निषदोः पर्यालोचनायामवगम्यते॥ केन भगवन्कर्माण्यशेषतो विसृ
जामीति शिखायज्ञोपवीतस्वाध्यायगायत्रीजपाद्यशेषकर्मत्या
गरूपे विविदिषासंन्यासे शिष्येणारुणिना पृष्टे सति गुरुः प्रजाप
तिः शिखां यज्ञोपवीतमित्यादिना सर्वत्यागमभिधाय दंडमाच्छाद
नं कौपीनं च परिग्रहेदिति दंडादिस्वीकारं विधाय त्रिसंध्यादौ स्ना
नमाचरेत्॥ संधिं समाधावात्मन्याचरेत्सर्वेषु वेदेष्वारण्यमावर्तये
त्॥ उपनिषदमावर्तयेदिति वेदनहेतूनाश्रमधर्माननुष्ठेयतया वि
धत्ते॥ अथ योगिनां परमहंसानां कोऽयं मार्ग इति विद्वत्संन्यासेन नारदे
न पृष्टे सति गुरुर्भगवान्प्रजापतिः स्वपुत्रमित्रेत्यादिना पूर्ववत्सर्व
त्यागमभिधाय कौपीनं दंडमाच्छादनं च स्वशरीरोपभोगार्थाय च
परिग्रहेदिति दंडादिस्वीकारस्य लौकिकत्वमभिधाय तच्च न मु
ख्योऽस्तीति शास्त्रीयत्वं मत्वा निषिध्य कोऽयं मुख्य इति चेदयं मुख्यो न
दंडं न शिखां न यज्ञोपवीतं न चाच्छादनं चरति परमहंस इति दंडा
दिलिंगरहितस्य मुख्यतामुक्त्वा न शीतं न चोष्णमित्यादिवाक्ये
नाप्रणवो न नमस्कार इत्यादिवाक्येन च लोकव्यवहारातीतत्व
मभिधायांते यत्पूर्णानंदैकबोधस्तद्ब्रह्माहमस्मीति कृतकृत्यो
भवतीत्यंतेन ग्रंथेन ब्रह्मानुभवमात्रपर्यवसानमाचष्टे॥ अतो
विरुद्धधर्मोपेतत्वादस्त्येवानयोर्महान्भेदः स्मृतिष्वप्ययं भेद उक्तः

इति द्रष्टव्यं॥ संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया॥ प्रव्रजंत्यकृतोद्वा
हाः परं वैराग्यमाश्रिताः॥ प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणं॥
तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् इत्यादि विविदिषासं
न्यासः॥ यदा तु विदितं तत्त्वं परं ब्रह्म सनातनं॥ तदैकदंडं संगृह्योप
वीतं शिखां त्यजेत्॥ ज्ञात्वा सम्यक् परं ब्रह्म सर्वं त्यक्त्वा परिव्रजे
त्॥ इत्यादि विद्वत्संन्यासः॥ ननु कलाविद्यास्विव कदाचित् औ
त्सुक्यमात्रेणापि वेदितुमिच्छा संभवत्येवं विद्वत्ताप्यापातदर्शिनः
पंडितंमन्यमानस्याप्यवलोक्यते न च तौ प्रव्रजंतौ दृष्टौ अतो विविदिषा
विद्वत्ते कीदृशौ विवक्षितौ इति चेत्॥ उच्यते॥ यथा तीव्रायां बुभुक्षा
यामुत्पन्नायां भोजनादन्यो व्यापारो न रोचते भोजने च विलंबो न
सोढुं शक्यते॥ तथा यदा जन्महेतुषु कर्मस्वत्यंतमरुचिर्वेदन
साधनेषु च श्रवणादिषु त्वरा महती संपद्यते तादृशी विविदिषा
संन्यासहेतुः॥ विद्वत्ताया अवधिरुपदेशसाहस्र्यामभिहितः॥ दे
हात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकं॥ आत्मन्येव भवेद्यस्य स
नेच्छन्नपि मुच्यत इति॥ श्रुतावपि॥ भिद्यते हृदयग्रंथिश्छिद्यंते
सर्वसंशयाः॥ क्षीयंते चास्य कर्माणि तस्मिन्दृष्टे परावर इति॥ परम
पि हैरण्यगर्भादिकं पदं अवरं यस्मात् असौ परावरः हृदये बुद्धौ
साक्षिणस्तादात्म्याध्यासोऽनाद्यविद्यानिर्मितत्वेन ग्रंथिवद्दृढसं
श्लेषरूपत्वाद्ग्रंथिरित्युच्यते॥ आत्मा साक्षी कर्ता वा आत्मनः सर्व
साक्षित्वेपि अस्य ब्रह्मत्वं अस्ति वा न वा ब्रह्मत्वेपि तद्बुध्या वेदितुं
शक्यं न वा शक्यत्वेपि तद्वेदनमात्रेण मुक्तिरस्ति न वेत्यादयः संश
याः कर्माण्यनारब्धान्यागामिजन्मकारणानि तदेतद्ग्रंथ्यादित्रयम
विद्यानिर्मितत्वादात्मदर्शनेन निवर्तते॥ स्मृतावप्ययमर्थ उपल
भ्यते॥ यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते॥ हत्वापि स इमा
ल्लोकान्न हंति न निबध्यत इति॥ यस्य ब्रह्मविदो भावः सत्तास्वभा
व आत्मा नाहंकृतो अहंकारेण तादात्म्याध्यासादंतर्नाच्छादितः।
बुद्धिलेपः संशयः तदभावे त्रैलोक्यवधेनापि न बध्यते किमुता
न्येन कर्मणेत्यर्थः॥ नन्वेवं सति विविदिषासंन्याससफलेन तत्त्वज्ञा

नेनैवागामिजन्मनो निवारितत्वात्॥ वर्तमानजन्मप्रेवस्यभोगमंत
रेण निवारयितुमशक्यत्वात् किमनेन विद्वत्संन्यासप्रयासेनेति चेत्
॥मैवं॥ विद्वत्संन्यासस्य जीवन्मुक्तिहेतुत्वात् तस्माद्वेदनाय विवि
दिषासंन्यासइवजीवन्मुक्तये विद्वत्संन्यासः संपादनीयः॥ अथ के
यं जीवन्मुक्तिः किं वा तत्र प्रमाणं कथं वा तत्सिद्धिः सिध्या वा किं प्र
योजनमिति चेत्॥ उच्यते॥ जीवतः पुरुषस्य कर्तृत्वभोक्तृत्वसुख
दुःखादिलक्षणश्चित्तधर्मः क्लेशरूपत्वाद्बंधो भवति तस्य निवारणं
जीवन्मुक्तिः॥ नन्वयं बंधः किं साक्षिणो निवार्यते किं वा चित्तात्॥
नाद्यः॥ तत्त्वज्ञानेनैव निवारितत्वात्॥ न द्वितीयः॥ असंभवात्॥ य
द्वा तु जलाद्द्रवत्वं निवार्यते वह्नेरुष्णत्वं॥ तदा चित्तात्कर्तृत्वादिनि
वारणसंभवः स्वाभाविकत्वं तु सर्वत्र समानं॥ मैवं॥ आत्यंतिकनि
वारणासंभवेपि अभिभवस्य संभवात्॥ यथा जलगतं द्रवत्वं मृ
त्तिकामेलनेनाभिभूयते॥ वह्नेरौष्ण्यं मणिमंत्रादिना तथा सर्वा
श्चित्तवृत्तयो योगाभ्यासेनाभिभवितुं शक्यंते॥ ननु प्रारब्धं कर्म त
त्त्वविद्यातत्कार्यं नाप्रानेष्यं[?] तस्य तत्त्वज्ञानस्य प्रतिबंधं कृत्वा
स्वफलदानाय अनुभावाल्लितं कर्म कथंपयाति न च सुखदुःखादि
भोगश्चित्तवृत्तिमंतरेण संपादयितुं शक्यते॥ ततः कथं अभिभवः॥ मैवं
॥ अभिभवसाध्याया जीवन्मुक्तेरपि सुखातिशयरूपत्वेन प्रारब्ध
फल एवांतर्भावात् तर्हि कर्मैव जीवन्मुक्तिं संपादयिष्यति माभू
त्पुरुषप्रयत्नः इति चेत्॥ कृषिवाणिज्यादावपि समानः पर्यनुयो
गः॥ कर्मणः स्वयमदृष्टरूपस्य दृष्टसाधनसंपत्तिमंतरेण फलज
ननासमर्थत्वाद्वापेक्षितः कृष्यादौ पुरुषप्रयत्न इति चेत् जीव
न्मुक्तावपि समं समाधानं॥ सत्यपि पुरुषप्रयत्ने कृष्यादेः फलपर्य
वसानं यत्र न दृश्यते तत्र प्रबलेन कर्मांतरेण प्रतिबंधः कल्पनीयः
॥ तच्च प्रबलं कर्म स्वानुकूलदृष्ट्याभावादिरूपां दृष्टसामग्रीं संपा
द्यैव प्रतिबध्नाति॥ स च प्रतिबंधो विरोधिना प्रबलतरेण तंभके
नकारीरीष्ट्यादिरूपेण कर्मणाऽपनीयते॥ तच्च कर्म स्वानुकूलां
वृष्टिलक्षणां दृष्टसामग्रीं संपाद्यैव प्रतिबंधमपनयति॥ किं बहु

नाप्रारब्धकर्मण्येवासंलमक्तेनभवतायोगाभ्यासरूपस्यपुरुषप्र
यत्नस्यवैयर्थ्यंमनसापिचिंतयितुमशक्यं अथवाप्रारब्धंकर्म
यथातत्त्वज्ञानात्प्रबलं।।तथातस्मादपिकर्मणोयोगाभ्यासःप्रब
लोऽस्तुतथाचयोगिनामुद्दालकवीतहव्यादीनांस्वेच्छयादेहत्या
गउपपद्यते।।यद्यप्यल्पायुषामस्माकंतादृशोयोगोनसंभवति।।
तथापिकामादिरूपचित्तवृत्तिनिरोधमात्रेयोगेकोनामप्रयासः।
यदिशास्त्रीयस्यप्रयत्नस्यप्राबल्यंनांगीक्रियेततदाचिकित्साप्रा
रभ्यमोक्षशास्त्रपर्यंतानांसर्वेषामानर्थक्यंप्रसज्येत।।नहिकदा
चित्कर्मफलविसंवादमात्रेणदौर्बल्यमापादयितुंशक्यं अन्य
थाकादाचित्कंपराजयंदृष्ट्वासर्वैर्भूपैर्गजाश्वादिसेनोपेक्षेत।।अत
एव आनंदबोधाचार्या आहुः।।नह्यजीर्णभयादाहारपरित्यागः।।भि
क्षुकभयाद्वास्थाल्या अनधिश्रयणंयूकाभयाद्वाप्रावरणपरित्याग
इति।।शास्त्रीयप्रयत्नस्यप्राबल्यंवसिष्ठरामसंवादेविस्पष्टमव
गम्यते।।सर्वमेवेहहिसदेत्यारभ्यतदनुतदप्यवमुच्यसाधुतिष्ठेत्यं
तग्रंथेन।।वसिष्ठः।।सर्वमेवेहहिस[illegible]पारेरघुनंदन।।सम्यक्
प्रयुक्तात्सर्वेणपौरुषात्समवाप्यते।।[illegible]दृष्टेपरा[illegible]स्वर्गलोकब्र
ह्मलोकादिफलंपौरुषंपुनःकामेष्टिकृषिवाणि[illegible]मब्र
ह्मोपासनालक्षणःपुरुषप्रयत्नः।।उच्छास्त्रंशास्त्रितंचेतिपौरुषं
द्विविधंस्मृतं।।तत्रोच्छास्त्रमनर्थायपरमार्थायशास्त्रितम्।।उच्छा
स्त्रपरद्रव्यापहारपरस्त्रीगमनादि।।शास्त्रितंनित्यनैमित्तिकानुष्ठाना
दि।।अनर्थोनरकः।।अर्थेषुस्वर्गादिषुपरमोमोक्षःपरमार्थः।।आबा
ल्यादलमभ्यस्तैःशास्त्रसत्संगमादिभिः।।गुणैःपुरुषयत्नेनसोर्थः
संपाद्यतेहितः।।अलंसंपूर्णसम्यगित्यर्थः।।गुणैर्युक्तेनेत्याध्याहा
रः।।हितःश्रेयोरूपः।। श्रीरामः ।।प्राक्तनं वासनाजालंनियोजयति
मांयथा।।मुनेतथैवतिष्ठामिकृपणःकिंकरोम्यहं।।वासनाधर्माध
र्मरूपाजीवगतसंस्काराः।।वसिष्ठः।।अतएवहिहेरामश्रेयःप्राप्नो
षिशाश्वतं।।स्वप्रयत्नोपनीतेनपौरुषेणैवनान्यथा।।यतोवासनाप
रतंत्रोभवान् अतएवपारतंत्र्यनिवारणायस्योत्साहसंपादितोमनो।

वाङ्कायजन्यःपुरुषव्यापारोपेक्षितः॥द्विविधोवासनाव्यूहःशुभश्चै
वाशुभश्चते॥आत्मनोविद्यतेराम द्वयोरेकतरोथवा॥किंधर्माधर्मौ
उभावपित्वांनियोजयतउतैकतरइतिविकल्पःएकतरपक्षेपिशुभोऽ
शुभोवेत्यर्थात्सिद्धोविकल्पः॥वासनौघेनशुद्धेनतत्रचेदपनीयसे
॥तत्क्रमेणाशुतेनैवपदंप्राप्स्यसिशाश्वतं॥तत्रतेषुपक्षेषुततस्त
द्धितेनैवक्रमेणशुभवासनाप्रापितेनैवाचरणेनप्रयत्नांतरनिरपेक्षे
णशाश्वतंपदंमोक्षं॥अथचेदशुभोभावस्त्वांयोजयतिसंकटे॥प्रा
क्तनस्तदसौयत्नाज्जेतव्योभवतास्वयं॥भावोवासनाततद्धियत्नोऽ
शुभविरोधिशास्त्रीयधर्मानुष्ठानंतेनस्वयंजेतव्यः॥नतुसुहृद्भृत्य
मुखेनैवपुरुषांतरमुखेनजेतुंशक्यः॥शुभाशुभाभ्यांमार्गाभ्यांवहं
तीवासनासरित्॥पौरुषेणप्रयत्नेनयोजनीयाशुभेपथि॥उभयप
क्षेतुशुभभागस्यप्रयत्ननैरपेक्ष्येप्यशुभभागंशास्त्रीयप्रयत्नेननिवा
र्यशुभएवतस्यस्थानेसमाचरेत्॥अशुभेषुसमाविष्टंशुभेष्वेवावता
रयेत्॥स्वमनःपुरुषार्थेनुबलेनबलिनांवर॥अशुभेषुपरस्त्रीद्र
व्यादिषुशुभेषुशास्त्रार्थदेवताध्यानादिषुपुरुषार्थेनपुरुषप्रयत्ने
नबलेनप्रबलेन॥अशुभाच्चालितंयातिशुभंतस्मादपीतरत्॥जंतोश्चित्तंतु
शिशुवत्तस्मात्तच्चालयेद्बलात्॥यथाशिशुःमृद्भक्षणान्निवार्यफ
लभक्षणेयोज्यते॥मणिमुक्ता — कर्षणान्निवार्यकंदुकाद्याकर्ष
णेयोज्यते॥तथाचित्तमपिसत्संगेनदुःसंगात्तद्विपरीतविषया
न्निवारयितुंशक्यं॥समतासांत्वनेनाशुनद्रागितिशनैःशनैः॥पौरु
षेणप्रयत्नेनलालयेच्चित्तबालकं॥चपलस्यपशोःबंधनस्थानेप्र
वेशनाययद्वावुपायौभवतः॥हरिततृणप्रदर्शनकंडूयनादिकंवाक्
पारुष्यदंडादिभर्त्सनंचेति॥तत्राद्येनसहसाप्रवेश्यतेद्वितीयेनतस्त
तोधावन्छनैःशनैःप्रवेश्यते॥तथाशत्रुमित्रादिसमत्वसुखबोध
नं॥प्राणायामप्रत्याहारादिपुरुषप्रयत्नश्चस्येतौद्वौचित्तशांत्युपायौ
तत्राद्येनमृदुयोगेनशीघ्रंलालयेत्॥द्वितीयेहठयोगेनद्रागितिन
लालयेत् किंतुशनैःशनैः॥द्रागभ्यासवशाद्यातिपदातेवासनोद
यं॥तदाभ्यासस्यसाफल्यंविद्धित्वमरिमर्दन॥मृदुयोगाभ्यासाच्छीघ्र

भेवसह्रासनोदयेसतिसाफल्यमभ्यासस्यवक्तव्यंनत्वस्यकालत्वे
नासंभावनाशंकनीया॥संदिग्धायामपिभूमौसुभामेवसमाहर॥एवं
सुभायांवासनावृद्धौतातदोषोनकश्चन॥सुभवासनाभ्यस्यमानासं
पूर्णानवेतिसंदेहस्तदापिसुभामभ्यसेदेव॥तद्यथा॥सहस्रजपे
प्रवृत्तस्यदशमीप्रतसंख्यायदासंदिग्धातदापुनरपिप्रातंजपेत्
असंपूर्तौसंपूर्तिःफलिष्यतिसंपूर्तौतद्ध्यानसहस्रजपोदुष्य
ति॥अव्युत्पन्नमनायावद्भवानज्ञाततत्पदः॥गुरुशास्त्रप्रमाणैः
स्तुनिर्णीतंतावदाचर॥ततःपक्वकषायेणनूनंविज्ञाततवस्तुना॥सु
भोप्यसौत्वयात्याज्योवासनौघोनिरोधिना॥यद्यपिसुभमार्यसे
वितंतच्छुभमनुसृत्यमनोज्ञभावबुध्या॥अधिगम्यपदंपरंहिती
यंतदनुतदप्यवमुच्यसाधुतिष्ठ॥इतिस्मरेऽर्थः॥तस्माद्योगाभ्या
सेनकामाद्यभिभवसंभवात्॥जीवन्मुक्तौनविवदितव्यम्॥ ॥
इतिजीवन्मुक्तिस्वरूपम्॥श्रुतिस्मृतिवाक्यानिजीवन्मुक्तिसद्भा
वेप्रमाणानितानिचकठवल्ल्यादिषुपठ्यंते॥विमुक्तश्चविमुच्य
तइति॥जीवन्नेवदृष्टबंधात्कामादेर्विशेषेणमुक्तःसन्देहपाते
भाविबंधाद्विशेषेणमुच्यते॥वेदनात्प्रागपिशमदमादिसंपादने
नकामादिभ्योमुच्यएवतथाप्युत्पन्नानांकामादीनांतत्रप्रयत्नेन
निरोधः॥अत्रतुधीवृत्त्यभावादनुत्पत्तिरेवततोविशेषेणमुच्यते॥इ
तथामलयेदेहपातेचसतिकंचित्कालंभाविदेहबंधान्मुच्यते॥
अत्रासंतिकमोक्षइत्यभिप्रेत्यविशेषेणोक्तं॥बृहदारण्यकेपः
ठ्यते॥यदासर्वेप्रमुच्यंतेकामायेस्यहृदिश्रिताः॥अथमर्त्योमृ
तोभवत्यत्रब्रह्मसमश्नुतइति॥श्रुत्यंतरेपि॥सचक्षुरचक्षुरिव
सकर्णोऽकर्णइवसमनाअमनाइवेति॥एवमन्यत्रापिउदाहा
र्यं॥स्मृतिषुजीवन्मुक्तविदेहमुक्तस्थितप्रज्ञभगवद्भक्तगुणाती
तब्राह्मणातिवर्णाश्रम्यादिनामभिस्तत्रतत्रव्यवह्रियते॥वसिष्ठ
रामसंवादेन्रणांज्ञानैकनिष्ठानामित्यारभ्यसत्किंचिदवशिष्यते
इत्यंतेनग्रंथेनजीवन्मुक्तःपठ्यते॥वसिष्ठः॥न्रणांज्ञानैकनिष्ठाना
मात्मज्ञानविचारिणां॥साजीवन्मुक्ततोदेतिविदेहमुक्ततेवया॥

त्वानेकनिष्ठत्वंलौकिकवैदिककर्मत्यागः॥देहेंद्रियसदसद्भावमात्रे
णमुक्तिद्वयस्यविशेषोनत्वनुभवतः द्वैतप्रतीतेरुभयत्राभावात्॥
॥श्रीरामः॥ब्रह्मन्विदेहमुक्तस्यजीवन्मुक्तस्यलक्षणं॥ब्रूहियेनत
थैवाहंयतेशास्त्रगयादृशा॥वसिष्ठः॥यथास्थितमिदंयस्यव्यवहा
रवतोपिच॥अस्तंगतंस्थितंव्योमसजीवन्मुक्तउच्यते॥इदंप्रतीय
मानंगिरिनदीसमुद्रादिकंजगत्प्रतिपत्तुर्देहेंद्रियव्यवहारेणसह
महाप्रलयेपरमेश्वरेणोपसंहृतंसत्स्वरूपोपमर्देनास्तंगतंभवति॥
अत्रतुनतथा॥किंतुविद्यतएवदेहेंद्रियादिव्यवहारः॥गिरिनद्या
दिकंचेश्वरेणानुपसंहृतत्वात्॥यथापूर्वंभवतिष्ठमानंसत्सर्वैरन्यैः
प्राणिभिर्विस्पष्टमवलोक्यते॥जीवन्मुक्तस्यतत्प्रत्यायकहत्वाभा
वात्सुषुप्ताविवसर्वमस्तंगतंभवति॥स्वयंप्रकाशमानंचिद्व्योमके
वलमवशिष्यते बद्धस्यसुषुप्तौतात्कालिकत्वस्यभावसाम्येपिप्रा
विधीहतिबीजसद्भावान्नजीवन्मुक्तत्वं॥नोदेतिनास्तमायातिसुख
दुःखेमुखप्रभा॥यथाप्राप्तस्थितिर्यस्यजीवन्मुक्तउच्यते॥मुखप्रभा
हर्षःस्रक्चंदनसत्कारादिसुखेप्राप्तेपिसंसारिणइवहर्षोनोदेति॥
मुखप्रभास्तमयोदैन्यंधनहानिधिक्कारादिदुःखेप्राप्तेपिनदीनोभव
ति॥इदानींतनस्वप्रयत्नविशेषमंतरेणप्रारब्धकर्मोपादितपूर्वमवा
ह्यागतभिक्षान्नादिकंयथाप्राप्तंतस्मिन्स्थितिर्देहरक्षा॥समाधिदा
र्ढ्येनस्रक्चंदनादिप्रतीत्यभावात्॥कदाचिद्व्युत्थानदशायांआपात
तःप्रतीतावपिविवेकदार्ढ्येनैवहेयोपादेयत्वबुध्यभावात् हर्षा
दिराहित्यंउपपद्यते॥योजागर्तिसुषुप्तस्थोयस्यजाग्रन्नविद्यते॥
यस्यनिर्वासनोबोधःसजीवन्मुक्तउच्यते॥चक्षुरादींद्रियाणांस्वस्व
गोलकेष्ववस्थानेनोपरत्यभावात्जागर्ति॥ मनोवृत्तिरहितत्वा
त्सुषुप्तिस्थः॥अतएवइंद्रियैरर्थोपलब्धिरस्येतस्यजागरणलक्ष
णाभावात् जाग्रन्नविद्यते॥सत्यपिबोधेजायमानेब्रह्मवित्त्वाभि
मानादिर्भोगार्थोपादितकामादिस्वधीदोषवासनावृत्तिराहित्ये
नतद्दोषाभावान्निर्वासनत्वं॥रागद्वेषभयादीनामनुरूपंचरन्नपि
॥योंतर्व्योमवदत्यच्छःसजीवन्मुक्तउच्यते॥रागानुरूपंभोजनादि

प्रवृत्तिः दृष्टानुरूपंबौद्धकापालिकादिभ्योविमुखत्वंभयानुरूपं
सर्पव्याघ्रादिभ्योपसर्पणं॥आदिशब्देनमात्सर्यादिमात्सर्यानुरू
प्यमितरयोगिभ्यःआधिक्येनसमाध्याद्यनुष्ठानं॥सत्यपिह्युत्थान
दशायांईदृशआचरणेपूर्वाभ्यासेनभावितेविश्रांतचित्तस्यकालु
ष्यरहितत्वादंतःस्वच्छत्वं॥यथाव्योम्निधूमधूलिमेघादियुक्तेपि
निर्लेप स्वभाव त्वातिशयेनस्वच्छत्वंतद्वत्॥यस्यनाहंकृतोभावो
बुद्धिर्यस्यनलिप्यते॥कुर्वतोऽकुर्वतोवापिसजीवन्मुक्तउच्यते॥पू
र्वार्द्धंविद्वत्संन्यासप्रस्तावेव्याख्यातं॥लोकेबद्धस्यपुरुषस्यशास्त्री
यंकर्मकुर्वतोहंकर्तेतितदाचिदात्माहंकृतोभवति॥स्वर्गंप्राप्स्या
मीतिहर्षेणबुद्धिर्लिप्यते॥अकुर्वतस्तुसक्तवानस्मीतिअहंकृत
त्वंस्वर्गलाभविषादोलेपः एवंप्रतिषिद्धकर्मणिलौकिककर्मणिचय
थासंभवंयोजनीयं॥मुक्तस्यतुतादात्म्याध्यासाभावाद्धर्षाद्यभावाच्च
नदोषद्वयम्॥यस्मान्नोद्विजतेलोकोलोकान्नोद्विजतेचयः॥हर्षाम
र्षभयान्मुक्तःसजीवन्मुक्तउच्यते॥अधिक्षेपताडनादावप्रवृत्तत्वाद
तस्माल्लोकोनोद्विजते अतएवैतस्मिन्लोकस्याधिक्षेपाद्यप्रवृत्तेः
कस्यचिद्दुष्टस्यतत्प्रवृत्तावपिएतच्चित्तेतादृशविकल्पानुदया
च्चायमपिनोद्विजते॥शांतसंसारकलनः कलावानपिनिष्कलः॥
यःसचित्तोपिनिश्चित्तः सजीवन्मुक्तउच्यते॥शत्रुमित्रमानावमा
नादिविकल्पाःसंसारकलनाचतुःषष्टिविद्याःकलाःतत्सद्भावेपि
तदभिमानव्यवहारयोरभावान्निष्कलत्वं॥चित्तस्यस्वरूपेणसद्भा
वेपिलौकिकभाववृत्त्यभावान्निश्चित्तत्वं॥चिंतेतिपाठे वासना
वशादात्मध्यानवृत्तिसद्भावेपिलौकिकवृत्त्यभावान्निश्चिंत्यत्वं॥
यःसमस्तार्थजातेषुव्यवहार्यपिशीतलः॥परार्थेष्विवपूर्णात्मा
जीवन्मुक्तःसउच्यते॥परगृहेविवाहोत्सवादौस्वयंगत्वातत्मीये
तदीयकार्येव्यवहरन्नपिलाभालाभयोर्हर्षविषादरूपंबुद्धिसं
तापंनप्राप्नोति॥एवमयमुक्तःस्वकार्येपिशीतलः नकेवलंसंता
पाभावाच्छीतलत्वंकिंतुपरिपूर्णस्वरूपानुसंधानादपि॥इति
जीवन्मुक्तलक्षणम्॥अथविदेहमुक्तलक्षणम्॥जीवन्मुक्त

पदंत्यक्त्वास्वदेहेकालसात्कृते॥ विशत्यदेहमुक्तत्वंपवनोऽस्पंद
तामिव॥ यथावायुःकदाचिच्चलनंत्यक्त्वा निश्चलरूपेणावतिष्ठते
॥ तथामुक्तात्मापिउपाधिकृतसंसारंत्यक्त्वा स्वरूपेणावतिष्ठते॥
विदेहमुक्तोनोदेतिनास्तमेतिनशाम्यति॥ नसन्नासन्नदूरस्थोनचा
हंनचनेतरः॥ उदयास्तमयौहर्षविषादौनच शाम्यति नचैतत्परित्या
गोलिंगदेहस्यात्रैवलीनत्वात्सद्रूपोजगद्धेतुरविद्यामायोपाधि
र्नेमात्रेश्वरः॥ असद्रूपोनापिभूतभौतिकः नदूरस्थइत्युक्त्यान
मायातीतः॥ नचेत्युक्त्यास्थूलभुक्समीपस्थत्वंनिषिध्यतेअहंन
चेतिनसमष्टिश्चनेतरइतिव्यष्टिव्यवहारयोग्योविकल्पःकोऽपिना
स्तीत्यर्थः॥ तदास्तिमितगंभीरंनतेजोनतमस्ततं॥ अनाख्यमनभि
व्यक्तंसत्किंचिदवशिष्यते॥ एवंविधयाविदेहमुक्त्यासदृशत्वो।
त्कर्षत्वोक्तेर्जीवन्मुक्तावपियावद्यावन्निर्विकल्पातिशयस्तावत्ता
वदुत्तमत्वंद्रष्टव्यं॥ भगवद्गीतासुद्वितीयेध्यायेस्थितप्रज्ञःपठ्य
ते॥ अर्जुनउवाच॰॥ स्थितप्रज्ञस्यकाभाषासमाधिस्थस्यकेश
व॥ स्थितधीःकिंप्रभाषेतकिमासीतव्रजेतकिं॥ प्रज्ञातत्त्वज्ञा
नंतद्द्विविधं॥ स्थितमस्थितंचेति॥ यथाजारेत्वनुरक्तनार्याःसर्वेष्वपि
व्यवहारेषुबुद्धिर्जा[illegible]रमेवध्या यतिप्रमाणप्रतीतानिक्रियमाणा
न्यपिगृहकर्माणिसद्यएवविस्मर्यंतेतथापरवैराग्योपेतस्ययो
गाभ्यासपाटवेनात्यंतवशीकृतचित्तस्योत्पन्ने तत्त्वज्ञानेनबु
द्धिर्जारमिवनैरंतर्येणतत्त्वंध्यायतितदिदंस्थितप्रज्ञानं॥ उक्तगु
णरहितस्यकेनापिपुण्यविशेषेणकदाचिदुत्पन्नेपितत्त्वज्ञाने
गृहकर्मवत्तथैवतत्त्वंविस्मर्यते तदिदंअस्थितंप्रज्ञानं॥ एतदेवा
भिप्रेत्यवसिष्ठआह॥ परव्यसनिनीनारीव्यग्रा पिगृहकर्मणि॥ तदे
वास्वादयत्यंतःपरसंगरसायनं॥ एवंतत्त्वेपरेशुद्धेधीरोविश्रांति
मागतः॥ तदेवास्वादयत्यंतर्बहिर्व्यवहरन्नपीति॥ तत्रस्थितप्रज्ञः
कालभेदाद्द्विविधः॥ समाहितोव्युत्थितश्च॥ तयोरुभयोर्लक्षणंपू
र्वोत्तराभ्यामर्द्धाभ्यांपृच्छति॥ समाधि स्थस्यस्थितप्रज्ञस्यकाभा
षाकीदृशोलक्षणवाचकैःशब्दैःसर्वैरयंभाष्यते॥ व्युत्थितःस्थि

तमज्ञः कीदृशं वाग्व्यवहारं करोतीति॥ तस्योपवेशनगमने मूढेभ्यो
विलक्षणे कीदृशे॥ श्रीभगवानुवाच॥ प्रजहाति यदा कामान्स
र्वान्पार्थ मनोगतान्॥ आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्य
ते॥ कामास्त्रिविधाः बाह्या आंतरा वासनामात्ररूपाश्चेति॥ उपा
र्जितमोदकादयो बाह्याः॥ आशामोदकादय आंतराः॥ पथि गत
तृणादिवत्पातितः प्रतीता वासनारूपाः॥ समाहितोऽशेषधी
वृत्तिसंक्षयात्सर्वान्परित्यजति॥ अस्ति चास्य मुखप्रसादलिंग
म्यः संतोषः स च न कामेषु किंतु आत्मन्येव कामानां त्यक्तत्वात्॥
बुद्धेः परमानंदरूपात्माभिमुखत्वाच्च॥ न चात्र संप्रज्ञातसमाधावि
वात्मानंदो मनोवृत्त्योल्लिख्यते किंतु स्वप्रकाशचिद्रूपेणात्मना
॥ संतोषश्च न वृत्तिरूपः किंतु संस्काररूपः॥ एवंविधैर्लक्षणवा
चकैः शब्दैः समाहितो भाष्यते॥ दुःखेष्वनुद्विग्नमनाः सुखेषु विगत
स्पृहः॥ वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते॥ दुःखं रोगादि
निमित्तजन्या रजोगुणविकाररूपा संतापात्मिका प्रतिकूला चित्त
वृत्तिः तादृशे दुःखे प्राप्ते सत्यहं पापी धिङ्मां दुरात्मानमित्यनुतापात्मि
का तमोगुणविकारत्वेन भ्रांतिरूपा चित्तवृत्तिरुद्वेगः॥ यद्यप्ययं
विवेक इवाभाति तथापि पूर्वस्मिन्जन्मनि चेत् तत्पापप्रवृत्तिप्रतिबंध
कत्वात्सप्रयोजनो भवति॥ इदानीं तु निष्प्रयोजन इति भ्रांतित्वं द्र
ष्टव्यं॥ सुखं राज्यपुत्रलाभादिजन्या सात्त्विकी प्रीतिरूपानुकूला चि
त्तवृत्तिस्तस्मिन्सुखे सत्यागामिन्स्तादृशस्य सुखस्य कारणं पुण्यम
नुष्ठाय तथैव तदपेक्षा तामसी वृत्तिः स्पृहा॥ तत्र च सुखदुःखयोः
प्रारब्धकर्मप्रापितत्वात् सुस्थितचित्तस्य वृत्तिसंभवाच्च तदुभयं
समुत्पद्यते॥ उद्वेगस्पृहे तु न विवेकिनः संभवतः॥ तथा रागभय
क्रोधाश्च तामसत्वेन कर्मप्रापितत्वाभावान्नास्य विद्यंते॥ एवं
लक्षणलक्षितस्थितधीः स्वानुभवप्रकटनेन शिष्यशिक्षार्थमा
नुद्वेगनिःस्पृहत्वादिगमकं वचो भाषत इत्यभिप्रायः॥ यः सर्वत्रा
नभिस्नेहस्तत्तत्प्राप्य शुभाशुभं॥ नाभिनंदति न द्वेष्टि तस्य प्रज्ञा प्र
तिष्ठिता॥ यस्मिन्स्त्रीपुत्रादौ त्वन्यदीये हानिवृद्धी स्वस्मिन्नारोप्येते तादृशो

न्यविषयस्तामसवृत्तिविशेषः स्नेहः सुखहेतुः शुभं कलत्रादिः शुभं तद्गुणकथनादिप्रवर्त्तिकाधीवृत्तिरभिनंदः॥ अत्र गुणकथनस्य परप्ररोचनार्थ लाभावेन व्यर्थत्वात् तद्धेतुरभिनंदस्तामसः॥ अस्य प्रत्यासेनदुःखहेतुः परकीयविद्यादिरेनं प्रति अशुभो विषयः तन्निंदाप्रवर्त्तिका बुद्धिप्रवृत्तिर्द्वेषः सोपि तामसः॥ तन्निंदायाः निवारणार्थत्वाभावेन व्यर्थत्वात्त एते तामसाधर्माः कथं विवेकिनि संभवेयुः॥ यदा संहरते चायं कूर्मोंगानीव सर्वशः॥ इन्द्रियाणींद्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता॥ सुस्थितस्य समस्ततामसवृत्त्यभावः पूर्वश्लोकाभ्यामभिहितः समाहितस्य तु वृत्त्य एव न संति कुतस्तामसत्व शंकेत्यभिप्रायः॥ विषया विनिवर्त्तंते निराहारस्य देहिनः॥ रसवर्जं रसोप्यस्य परं दृष्ट्वा निवर्त्तते॥ प्रारब्धं कर्म सुखदुःखहेतून्कांश्चिद्विषयांश्चंद्रोदयांधकारादिरूपान्स्वयमेव संपादयति॥ अन्यांस्तु गृहक्षेत्रादीन्पुरुषोद्योगद्वारेण॥ तत्र चंद्रोदयादयः पूर्वेन इंद्रियसंहारलक्षणेन समाधिनैव निवर्त्तते नान्यथा॥ गृहादयस्तु समाधिमंतरेणापि निवर्त्तंते॥ आहरणमाहारः उद्योगः निरुद्योगस्य गृहादिविषया निवर्त्तंते॥ रसस्तु न निवर्त्तते॥ रसो मानसी तृष्णा सोपि परमानंदरूपस्य परस्य ब्रह्मणो दर्शने सति स्वस्यानंदहेतुभ्यो निवर्त्तते॥ किं प्रजया करिष्यामो येषां नोयमात्मायं लोक इति श्रुतेः॥ यततो ह्यपि कौंतेय पुरुषस्य विपश्चितः॥ इन्द्रियाणि प्रमाथीनि हरंति प्रसभं मनः॥ तानि सर्वाणि संयम्य युक्त आसीत मत्परः॥ वशे हि यस्येंद्रियाणि तस्य प्रज्ञा प्रतिष्ठिता॥ उद्योगत्याग ब्रह्मदर्शनप्रयत्नं कुर्वतोपि कादाचित्कप्रमादपरिहाराय समाध्यभ्यासः॥ तदेतत्कि मासीतेति प्रश्नोत्तरम्॥ ध्यायतो विषयान्पुंसः संगस्तेषूपजायते॥ संगात्संजायते कामः कामात्क्रोधोभिजायते॥ क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः॥ स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति॥ असति समाध्यभ्यासे प्रमादप्रकार उपन्यस्तः॥ संगो ध्येयविषयसंनिधिः॥ संमोहो विवेकपराङ्मुखत्वं॥ स्मृतिविभ्रमस्तत्त्वानुसंधानाभावः॥ बुद्धिविनाशो विपरीतभावनोपचयदोषेण प्रतिबध्यस्य ज्ञानस्य मोक्षम

दलसामर्थ्याभावः॥रागद्वेषवियुक्तैस्तुविषयानिंद्रियैश्चरन्॥आ
त्मवश्यैर्विधेयात्माप्रसादमधिगच्छति॥विधेयात्मत्वंवशीकृत
मनस्त्वंप्रसादोनैर्मल्यंबंधराहित्यंसमाध्यभ्यासयुक्तस्यहास।
नाबलाद्व्युत्थानदशायामिंद्रियैर्व्यवहरन्नपिप्रसादंसम्यक्प्रा
प्नोतितदेतत्किंप्रजेत्यस्यप्रश्नोत्तरंगडपरितनेनापिग्रंथेन।
स्थितप्रज्ञःप्रपंचितः॥ननुप्रज्ञायाःस्थित्युत्पत्तिभ्यामपिसाध
नत्वेनरागद्वेषादिराहित्यमपेक्षितं॥बाढं॥तथाप्यस्तिविशेषः।
सचश्रेयोमार्गेवार्तिककारैर्दर्शितः॥विद्यास्थितयेमाःपेसाधनभूताःप्र
यत्ननिष्पाद्याःलक्षणभूतास्तुपुनःस्वभावतस्तेस्थिताःस्थितप्रज्ञे
॥जीवन्मुक्तिरितीमांचदंत्यवस्थांस्थितात्मसंबोधां॥बाधितेभेदप्र
तिभासबाधितात्मावबोधसामर्थ्यादिति॥भगवद्भक्तोद्वादशाध्या
येभगवतावर्णितः॥अद्वेष्टासर्वभूतानांमैत्रःकरुणएवच॥निर्म
मोनिरहंकारःसमदुःखसुखःक्षमी॥संतुष्टःसततंयोगीयतात्मा
दृढनिश्चयः॥मय्यर्पितमनोबुद्धिर्योमद्भक्तःसमेप्रियः॥ईश्वरार्पित
मनस्त्वेनसमाहितस्यान्यानुसंधानाभावात्॥व्युत्थितस्याप्युदासी
नानुसंधानेनहर्षविषादाभावात्सुखदुःखसाम्यंएवंवक्ष्यमाणे
ष्वपिहेतुर्द्रष्टव्यः॥यस्मान्नोद्विजतेलोकोलोकान्नोद्विजतेच
यः॥हर्षामर्षभयोद्वेगैर्मुक्तोयःसचमेप्रियः॥अनपेक्षःशुचिर्द
क्षउदासीनोगतव्यथः॥सर्वारंभपरित्यागीयोमद्भक्तःसमेप्रियः
॥योनहृष्यतिनद्वेष्टिनशोचतिनकांक्षति॥शुभाशुभपरित्यागीभ
क्तिमान्यःसमेप्रियः॥समःशत्रौचमित्रेचतथामानापमानयोः॥शी
तोष्णसुखदुःखेषुसमःसंगविवर्जितः॥तुल्यनिंदास्तुतिर्मौनी।
संतुष्टोयेनकेनचित्॥अनिकेतःस्थिरमतिर्भक्तिमान्मेप्रियोनर
इति॥अत्रापिपूर्ववद्विशेषोवार्तिककारैर्दर्शितः॥उत्पन्नात्मप्र
बोधस्यद्वेष्टृत्वाद योगुणाः॥अयत्नतोभवंत्यस्यनतुसाधन
रूपिण इति॥गुणातीतश्चतुर्दशाध्यायेवर्णितः॥अर्जुनः॥कै
र्लिंगैस्त्रीन्गुणानेतानतीतोभवतिप्रभो॥किमाचारःकथंचैतां
स्त्रीन्गुणानतिवर्तते॥त्रयोगुणाःसत्वरजस्तमांसितेषांपरिणाम

विषयेभ्यस्तवैः संसारः प्रवर्त्तते॥ अतोगुणातीतत्त्वमसंसारित्वंजी
वन्मुक्तत्वमितियावत्॥ लिंगानिपरे धामेतदीयगुणातीतत्त्ववो
धकानि आचारआचरणं तदीयमनःसंचारप्रकारःकथमिति
साधनप्रकारप्रश्नः॥ श्रीभगवानुवाच॥ प्रकाशंचप्रवृत्तिंचमोहमेव
चपांडव॥ नद्वेष्टिसंप्रवृत्तानिननिवृत्तानिकांक्षति॥ उदासीनवदा
सीनगुणैर्योनविचाल्यते॥ गुणावर्त्ततइत्येवयोवतिष्ठतिनेंगते॥ स
मदुःखसुखःस्वस्थःसमलोष्टाश्मकांचनः॥ तुल्यप्रियाप्रियो
धीरस्तुल्यनिंदात्मसंस्तुतिः॥ मानापमानयोस्तुल्यस्तुल्योमित्रा
रिपक्षयोः॥ सर्वारंभपरित्यागीगुणातीतःसउच्यते॥ मांचयोव्य
भिचारेणभक्तियोगेनसेवते॥ सगुणान्समतीत्यैतान्ब्रह्मभूयायक
ल्पते॥ प्रकाशप्रवृत्तिमोहाःसत्त्वरजस्तमोगुणाः॥ तेचजाग्रत्स्वप्न
योःप्रवर्त्तते॥ सुषुप्तिसमाधिशून्यचित्तावस्थासुनिवर्त्तते॥ प्रवृत्ति
श्चद्विविधा॥ अनुकूलाप्रतिकूलाचेति॥ तत्रमूढोजागरणेप्रतिकू
लप्रवृत्तिंद्वेष्टि॥ अनुकूलप्रवृत्तिंकांक्षति॥ गुणातीतस्यत्वनुकू
लप्रतिकूलाध्यासाभावाद्द्वेषाकांक्षेनस्तः॥ यथाद्वयोःकलहंकुर्व
तोरवलोकयिताकश्चित्तटस्थःस्वयंकेवलमुदास्ते॥ नतुजयपरा
जयाभ्यामितस्ततश्चाल्यते॥ तथागुणातीतोविवेकीस्वयमुदा
स्तेगुणागुणेषुवर्त्तते॥ नत्वहमितिविवेकः॥ औदासीन्यंअहमेव
करोमीत्यध्यासस्खलितत्वंनचास्यतदस्ति॥ तदिदंकिमाचारइ
त्यस्यप्रश्नस्योत्तरं॥ समदुःखसुखादीनिलिंगानिअव्यभिचरित
भक्तिसहितज्ञानध्यानाभ्यासेनपरमात्मसेवागुणात्ययसाधनम्
॥ब्राह्मणोव्यासादिभिर्वर्णितः॥ अनुत्तरीयवसनमनुपस्तीर्णशायि
नं॥ बाहूपधायिनंशांतंतंदेवाब्राह्मणंविदुः॥ ब्राह्मणशब्दोब्रह्म
विद्वचीत्यथब्राह्मणइतिश्रुत्यावर्णितं॥ ब्रह्मविदश्चविद्वत्संन्यासा
धिकारः यथाजातरूपधरोनाच्छादनंचरतिपरमहंसइत्यादिश्रुत्या
परिग्रहराहित्यस्यश्रुत्यत्वाभिधानादनुत्तरीयत्वादिकंतस्ययुक्तं॥
येनकेनचिदाच्छन्नोयेनकेनचिदाशितः॥ यत्रक्वचनशायीस्यात्तं
देवाब्राह्मणंविदुः॥ देहनिर्वाहायाशनाच्छादनशयनस्थानापेक्षा

यामप्यशनादिगतौगुणदोषौनउत्पद्येते॥उदरपूरणबुद्ध्यादिरूपस्य
निर्वाहस्यसमत्वान्निष्प्रयोजनस्यगुणदोषविचारस्यचित्तदोषत्वा
त्॥अतएवभागवतेपठ्यते॥किंवर्णितेनबहुनालक्षणंगुणदोष
योः॥गुणदोषदृष्टिर्दोषोगुणस्तूभयवर्जितइति॥कंथाकौपीनवा
सास्तुदंडधृक्ध्यानतत्परः॥एकाकीरमतेनित्यंतंदेवाब्राह्मणंवि
दुः॥ब्रह्मोपदेशादिनाप्राण्यनुजिघृक्षयास्वोत्तमत्वज्ञापनेनश्रद्धा
मुत्पादयितुंदंडकौपीनादिलिंगंधारयेत्॥कौपीनंदंडमाच्छादनंच
स्वशरीरोपभोगार्थायचलोकोपकारार्थायचपरिग्रहेदितिश्रुतेः॥अ
नुजिघृक्षयापितदीयगृहकृत्यादिवार्त्तांनकुर्यात्किंतुध्यानपरोभ
वेत्॥तमेवैकंजानथात्मानमन्यावाचोविमुंचथेतिश्रुतेः॥तमेवधी
रोविज्ञायप्रज्ञांकुर्वीतब्राह्मणः॥नानुध्यायाद्बहूञ्छब्दान्वाचोवि
ग्लापनंहितदितिश्रुतेश्च॥ब्रह्मोपदेशस्तुप्रसंगान्नभवतीतिनविरोधी
तच्चध्यानमेकाकित्वेननिर्विघ्नंभवति॥अतएवस्मृत्यंतरेभिहितम्॥ए
कोभिक्षुर्यथोक्तःस्याद्द्वावेवमिथुनंस्मृतं॥त्रयोग्रामःसमाख्यातऊ
र्ध्वंतुनगरायते॥नगरंनहिकर्त्तव्यंग्रामोवामिथुनंतथा॥ग्रामवार्त्ता
हितेषांस्याद्भिक्षावार्त्तापरस्परमिति॥स्नेहपैशुन्यमात्सर्यसंनिक
र्षात्प्रवर्त्तते॥निराशिषमनारंभंनिर्नमस्कारमस्तुतिं॥अक्षीणंक्षी
णकर्माणंतंदेवाब्राह्मणंविदुः॥शिष्टैःसंसारिभिःप्रणमतांपुरुषाणां
आशीर्वादःप्रयुज्यते॥यस्ययदपेक्षितंतंप्रतितदभिवृद्धिप्रार्थनमा
शीः तथाचपुरुषाणांभिन्नरुचित्वात्तदभिमतान्वेषणेनव्यग्र।
चित्तस्यलोकवासनावर्द्धते॥साचज्ञानविरोधिनी॥तथाचस्मृत्यं
तरे॥लोकवासनयाजंतोःशास्त्रवासनयापिच॥देहवासनया
ज्ञानंयथावन्नैवजायते॥एतच्चारंभनमस्कारादिष्वपिद्रष्टव्यम्॥
आरंभःस्वार्थंपरोपकारार्थंवागृहक्षेत्रादिसंपादनप्रयत्नस्तावे
तावाशीर्वादारंभौमुमुक्षुणात्याज्यौ॥नचाशीर्वादाभावेप्रणतानांखे
दःशंकनीयः॥लोकवासनाखेदयोरुभयोःपरिहारायनिखिला
शीर्वादप्रतिनिधित्वेननारायणशब्दप्रयोगात्॥आरंभस्तुसर्वोपि
दुष्टएव॥तथाचस्मृतिः॥सर्वारंभाहिदोषेणधूमेनाग्निरिवावृताइ

त्ति॥नमस्कारोपि विविदिषासंन्यासेभिहितः॥योभवेत्पूर्वसंन्या
सीतुल्योवैधर्मतोयदि॥तस्मैप्रणामःकर्त्तव्योनेतरायकदाचनेति
॥तत्रपूर्वत्वधर्मतुल्यत्वविचारेचित्तंविक्षिप्यते॥अतएवनमस्का
रमात्रएवबहवःकलहायमानाउपलभ्यंते॥तत्रनिमित्तंवार्त्तिक
कारैर्दर्शितं॥प्रमादिनोबहिश्चित्ताःपिशुनाःकलहोत्सुकाः॥सं
न्यासिनोपिदृश्यंतेदैवसंदूषिताशयाइति॥मुक्तस्यनमस्काराभा
वोभगवत्पादैर्दर्शितः॥नामादिभ्यःपरेभूम्निस्वाराज्येचस्थितोय
दा॥प्रणमेत्कंतदात्मज्ञोनकार्यंकर्मणातदेति॥चित्तकालुष्य
हेतोर्नमस्कारस्यप्रतिषेधेपिसर्वसाम्यबुध्याप्रसादहेतुर्नमस्कारो
ऽप्युपेयते॥तथाचस्मृतिः॥ईश्वरोजीवकलयाप्रविष्टोभगवानिति
॥प्रणमेद्दंडवद्भूमावाश्वचंडालगोखरमिति॥स्तुतिर्मनुष्यविषया
प्रतिषिध्यतेनेश्वरविषया॥तथाचस्मृतिः॥आदरेणयथास्तौति ध
नवंतंधनेच्छया॥तथाचेद्विश्वकर्त्तारंकोनमुच्येत्तबंधनादिति॥अ
अतएवाऽक्षीणत्वंअदीनत्वं॥अतएवस्मृतिः॥अलाभेनविषादीस्या
ल्लाभेचैनंनहर्षयेदिति॥अलब्ध्वानविषीदेतकालेकालेशनंक्वचित्
लब्ध्वानहृष्येद्धृतिमानुभयंदैवतंत्रितं॥क्षीणकर्मत्वंविधिनिषेधा
नधीनत्वं॥निस्त्रैगुण्येपथिविचरतांकोविधिःकोनिषेधइतिस्मर
णात्॥एतदेवाभिप्रेत्यभगवताप्युक्तं॥त्रैगुण्यविषयावेदानिस्त्रै
गुण्योभवार्जुन॥निर्द्वंद्वोनित्यसत्त्वस्थोनिर्योगक्षेमआत्मवानिति
॥नारदः॥स्मर्त्तव्यःसततंविष्णुर्विस्मर्त्तव्योनजातुचित्॥सर्वेवि
धिनिषेधास्युरेतयोरेवकिंकराइति॥योऽहेरिवगुणाद्भीतःस
न्मानान्नरकादिव॥कुणपादिवयःस्त्रीभ्यस्तंदेवाब्राह्मणंविदुः
॥राजवार्तादितेषांस्यादित्युक्तत्वात्तथैवतद्गुणाद्भीरित्युपपद्यते
सन्मानस्यासक्तिकारणतयापुरुषार्थविरोधित्वान्नरकवद्धेय
त्वंमरणवदितिवापाठः॥अतएवस्मृतिः॥असन्मानात्तपोवृद्धिः
सन्मानात्तुतपःक्षयः॥अर्चितःपूजितोविप्रोदुग्धागौरिवसीदति
॥एतदेवाभिप्रेत्यावमानउपादेयतयास्मर्यते॥तथाचरेतवैयोगी
सतांधर्ममदूषयन्॥ जनायथावमन्येरन्गच्छेयुर्नैवसंगतमिति॰

स्त्रीपुद्विषोदोषः॥प्रतिषिद्धंजुगुप्सितत्वंच॥तत्रप्रतिषिद्धमानं
कदाचित्प्रारब्धबलादुत्पद्यते॥तदेतदभिप्रेत्याहस्मृतिः॥माना
स्वस्रादुहित्रावानैकशय्यासनोभवेत्॥बलवानिंद्रियग्रामोविद्वां
समपिकर्षति॥तथाचस्मृतिभिर्जुगुप्सादर्शिता॥स्त्रीणामवाच्य
देशस्यक्लिन्ननाडीव्रणस्यच॥अभेदेपिमनोभेदाज्जनःप्रायेण
वंच्यते॥चर्मखंडद्विधाभिन्नमपानोद्गारधूपितं॥येरमंतिनरा
स्तत्रकृमितुल्याःकथंनते॥येरमंतिनमस्तेभ्यःसाहसंकिमतः
परमितिवापाठः॥अतःप्रतिषेधजुगुप्सयोरुभयोर्विवक्षयाकुण
पदृष्टांतोऽत्राभिहितः॥येनपूर्णमिवाकाशंभवत्येकेनसर्वदा॥शू
न्यंयस्यजनाकीर्णंतंदेवाब्राह्मणंविदुः॥संसारिणामेकाकित्वेना
वस्थानंभयालस्यादिहेतुत्वाद्धेयंजनसंबाधश्चातथाविधत्वादु
पेयः॥योगिनस्तुतद्विपरीतत्वमेकाकित्वेसत्यविघ्नेनध्यानानुवृत्तौ
परिपूर्णेनपरमानंदात्मनासर्वमाकाशंपूर्णमिवावभासते॥अतो
भयालस्यशोकमोहादयोनभवंति॥तत्रकोमोहःकःशोकएकत्व
मनुपश्यतइतिश्रुतेः॥जनाकीर्णमितिजनसहितंस्थानंएजवार्ता
दिनाध्यानविरोधित्वादानंदात्मप्रतीतिरहितंतच्छून्यमिवचित्तं
क्लेशयति॥जगतोमिथ्यात्वादात्मनःपूर्णत्वाच्चेत्यर्थः॥अतिवर्णाश्र
मीसूतसंहितायांमुक्तिखंडेपंचमाध्यायेपरमेश्वरेणवर्णितः॥ब्र
ह्मचारीगृहस्थश्चवानप्रस्थोयभिक्षुकः॥अतिवर्णाश्रमीतेपिक्रमा
च्छ्रेष्ठाविचक्षणाः॥अतिवर्णाश्रमीप्रोक्तोगुरुःसर्वाधिकारिणां॥
नकस्यापिभवेच्छिष्योयथाहंपुरुषोत्तमः॥अतिवर्णाश्रमीसाक्षा
द्गुरूणांगुरुरुच्यते॥तत्समोनाधिकश्चास्मिन्लोकेस्त्येवनसंशयः
॥यःशरीरेंद्रियादिभ्योविभिन्नंसर्वसाक्षिणं॥पारमार्थिकविज्ञान
सुखात्मानंस्वयंप्रभं॥परंतत्त्वंविजानातिसोतिवर्णाश्रमीभवेत्॥
योवेदांतमहावाक्यश्रवणेनैवकेशव॥आत्मानमीश्वरंवेदसोतिव
र्णाश्रमीभवेत्॥योवस्थात्रयनिर्मुक्तमवस्थासाक्षिणंसदा॥महा
देवंविजानातिसोतिवर्णाश्रमीभवेत्॥वर्णाश्रमादयोदेहेमायया
परिकल्पिताः॥नात्मनोबोधरूपस्यममतेसंतिसर्वदा॥इतियोवेद

वेदांतैः सोतिवर्णाश्रमीभवेत्॥ आदित्यसंनिधौलोकश्चेष्टतेस्व
यमेवतु॥ तथामत्संनिधावेवसमस्तंचेष्टतेजगत्॥ इतियोवेद०॥
सुवर्णहारकेयूरकटककस्वस्तिकादयः॥ कल्पितामायया तद्वज्जग
न्मय्येवसर्वदा॥ इतियोवेद०॥ शुक्तिकायांयथातारंकल्पितंमाय
यातथा॥ महदादिजगन्मायामयंमय्येवकल्पितं॥ इति०॥ चंडाल
देहेपश्वादिशरीरेब्रह्मविग्रहे॥ अन्येषुतारतम्येनस्थितेषुपुरुषो
त्तम॥ व्योमवत्सर्वदाव्याप्तःसर्वसंबंधवर्जितः॥ एकरूपोमहादे
वःस्थितःसोहंपरामृतः॥ इतियो०॥ विनष्टदिग्भ्रमस्यापियथापूर्वं
विभातिदिक्॥ तथाविज्ञानविध्वस्तंजगन्मेभातितन्नहि॥ इतियो०
यथास्वप्नप्रपंचोयंमयिमायाविजृंभितः॥ तथाजाग्रत्प्रपंचोपिम
यिमायाविजृंभितः॥ इतियो०॥ यस्यवर्णाश्रमाचारोगलितःस्वात्म
दर्शनात्॥ सवर्णानाश्रमान्सर्वानतीत्यस्वात्मनिस्थितः॥ यस्त्यक्त्वा
स्वाश्रमान्वर्णानात्मन्येवस्थितःपुमान्॥ सोतिवर्णाश्रमीप्रोक्तःस
र्ववेदार्थवेदिभिः॥ नदेहोनेंद्रियंप्राणोनमनोबुध्यहंकृती॥ नचित्तं
नैवमायाचनचव्योमादिकंजगत्॥ नकर्तानैवभोक्ताचनचभोज
यितातथा॥ केवलंचित्सदानंदंब्रह्मैवात्मायथार्थतः॥ जलस्य
चलनादेवचंचलत्वंयथारवेः॥ तथाहंकारसंसारादेवसंसारआत्म
नः॥ तस्मादन्यगतावर्णाआश्रमाइतिकेशव॥ आत्मन्यारोपि
ताएवभ्रांत्यातेनात्मवेदिनः॥ नविधिर्ननिषेधश्चनवर्ज्यावर्ज्यक
ल्पना॥ आत्मविज्ञानिनामस्तितथानान्यज्जनार्दन॥ आत्मविज्ञा
निनांनिष्ठामहंवेदांबुजेक्षण॥ माययामोहितामर्त्यानैवजानंति
सर्वदा॥ नमांसचक्षुषानिष्ठाब्रह्मविज्ञानिनामियं॥ दृष्टुंशक्यास्व
तःसिद्धाविदुषांसैवकेशव॥ यत्रसुप्ताजनानित्यंप्रबुद्धस्तत्रसंय
मी॥ प्रबुद्धायत्रतेविद्वान्सुषुप्तस्तत्रकेशव॥ एवमात्मानमद्वंद्वंनि
र्विकारंनिरंजनं॥ नित्यशुद्धंनिराभासंचिन्मात्रंपरमामृतं॥ योवि
जानातिवेदांतैःस्वानुभूत्याचनिश्चितं॥ सोतिवर्णाश्रमीप्रोक्तःस
एवगुरुरुत्तमइति॥ तदेवंविमुक्तश्चविमुच्यतइत्यादिश्रुतयोजी
वन्मुक्तस्थितप्रज्ञभगवद्भक्तगुणातीतब्राह्मणातिवर्णाश्रममति।

पारकस्यादिवाक्यानिजीवन्मुक्तिसद्भावेप्रमाणानीतिस्थितं॥ ः॥
॥इतिजीवन्मुक्तप्रमाणप्रकरणं॥ ॥अथजीवन्मुक्तिसाधनंनिरू
प्यामः॥ ॐ ॥तत्त्वज्ञानमनोनाशवासनाक्षयास्तत्साधनं॥अतए
ववासिष्ठरामायणउपशमनप्रकरणस्यावसानेजीवन्मुक्तशरीरा
णामित्यस्मिन्प्रस्तावेवसिष्ठआह॥वासनाक्षयविज्ञानमनोनाश
महामते॥समकालंचिराभ्यस्ताभवंतिफलदाइमेइति॥अन्वय
मुक्त्वाव्यतिरेकमाह॥त्रयएतेसमंयावन्नस्वभ्यस्तामुहुर्मुहुः॥ता
वन्नपदसंप्राप्तिर्भवत्यपिसमाशतैरिति॥समकालाभ्यासाभावे
बाधकमाह॥एकैकशोनिषेव्यंतेयद्येतेचिरमप्यलं॥तन्नसिद्धिं
प्रयच्छंतिमंत्राःसंकलिताइव॥संकीलिताइतिवापाठः॥यथासं
ध्यावंदनेमार्जनेनसहविनियुक्तानांआपोहिष्ठेत्यादीनांतिसृणा
मृचांमध्येप्रतिदिनमेकैकस्यामृचःपाठेशास्त्रीयानुष्ठानेनसिध्य
ति॥यथाषडंगमंत्राणामेकैकमंत्रेणनसिद्धिः॥यथावालोकेशा
करूपोदनादीनामेकैकेननभोजनसिद्धिः॥तद्वच्चिराभ्यासस्यप्र
योजनमाह॥त्रिभिरेतैश्चिराभ्यस्तैर्हृदयग्रंथयोदृढाः॥निःशंक
मेवत्रुट्यंतिबिसभेदाद्गुणाइवेति॥तस्यैवव्यतिरेकमाह॥जन्मांत
रशताभ्यस्ताराममंसारसंस्थितिः॥साचिराभ्यासयोगेनविनान
क्षीयतेक्वचिदिति॥नकेवलमेकैकाभ्यासेफलाभावःकिंतुतत्त्व
रूपमपिनसिध्यतीत्याह॥तत्त्वज्ञानंमनोनाशोवासनाक्षयएवच
॥मिथःकारणतांगत्वादुःसाध्यानिस्थितानिहि॥त्रयाणामेतेषां
मध्येद्वयोर्द्वयोर्मेलनेनत्रीणिद्वंद्वानिभवंति॥तत्रमनोनाशवासना
क्षयद्वंद्वस्यान्योन्यकारणत्वं॥व्यतिरेकमुखेनाह॥यावद्विलीनंन
मनोनतावद्वासनाक्षयः॥नक्षीणावासनायावच्चित्तंतावन्नशाम्य
ति॥प्रदीपज्वालासंतानवद्वृत्तिसंतानरूपेणपरिणममानमंतः
करणद्रव्यंमननात्मकत्वान्मनइत्युच्यते॥तस्यनाशोनामवृत्तिरू
पपरिणामंपरित्यज्यनिरुद्धताकारेणपरिणामः॥तथाचपतंजलि
र्योगशास्त्रेसूत्रयामास॥व्युत्थाननिरोधयोरभिभवप्रादुर्भावौनिरो
धक्षणचित्तान्वयोनिरोधपरिणामइति॥व्युत्थानसंस्काराअभि

भूयंते॥निरोधसंस्काराःप्रादुर्भवंति॥निरोधयुक्तःक्षणश्चित्तेना
न्वीयते॥सोयंमनोनाशइत्यवगंतव्यं॥पूर्वापरपरामर्शमंतरेण
सहसोत्पद्यमानस्यक्रोधादिवृत्तिविशेषस्यहेतुश्चित्तगतःसं
स्कारोवासनापूर्वपूर्वाभ्यासेनचित्तेवास्यमानत्वात्तस्याश्चवास
नायाःक्षयोनामविवेकजन्यायांशांतिदांतिशुद्धवासनायांदृढा
यांसत्यपिबाह्येनिमित्तेक्रोधाद्यनुत्पत्तिः॥तत्रमनोनाशाभावेवृ
त्तिषूत्पद्यमानासुकदाचिद्बाह्यनिमित्तेनक्रोधाद्युत्पत्तेःनास्ति
वासनाक्षयः॥अक्षीणायांचवासनायांतथैववृत्त्युत्पादनान्ना
स्तिमनोनाशः॥तत्त्वज्ञानमनोनाशयोःपरस्परकारणत्वंव्यतिरे
कमुखेनाह॥यावन्नतत्त्वविज्ञानंतावच्चित्तशमःकुतः॥यावन्न
चित्तोपशमोनतावत्तत्त्ववेदनमिति॥इदंसर्वमात्मैवप्रतीयमानं
रूपरसादिकंजगन्मायामयंनत्वेतद्वस्तुतोस्तीतिनिश्चयस्तत्त्व
ज्ञानंतस्यानुत्पत्तौरूपरसादिविषयाणांसद्भावेसतितद्गोचराश्चित
वृत्तयोननिवारयितुंशक्यंते॥यथाप्रक्षिप्यमाणेष्विंधनेषुवह्नि
ज्वालानवार्यंतेतद्वत्॥असतिचचित्तोपशमेवृत्तिभिर्गृह्यमाणे
षुरूपादिषुसत्सुनेहनानास्तिकिंचनेतिश्रुतेर्यजमानःप्रस्तरइ
त्यादेरिवप्रत्यक्षविरोधशंकयाब्रह्माद्वितीयमित्येतादृशस्त
त्त्वनिश्चयोनोदीयात्॥वासनाक्षयतत्त्वज्ञानयोःपरस्परकारण
त्वंव्यतिरेकमुखेनाह॥यावन्नवासनानाशस्तावत्तत्त्वागमःकुतः
॥यावन्नतत्त्वसंप्राप्तिर्नतावद्वासनाक्षयइति॥क्रोधादिवास
नास्वनुवृत्तासुशमादिसाधनाभावान्नतत्त्वज्ञानमुदेतिअज्ञाते
चाद्वितीयब्रह्मतत्त्वेक्रोधादिनिमित्तस्यसत्यत्वभ्रमानपायात्
नवासनाहीयते॥त्वयोक्तानांत्रयाणांद्वंद्वानांअन्योन्यकारणत्व
मन्वयमुखेनचवयमुदाहरामः॥मनसिनष्टेसतिसंस्कारोद्बो
धकस्यबाह्यनिमित्तस्याप्रतीतौवासनाक्षीयतेक्षीणायांवासना
यांहेत्वभावेनक्रोधादिवृत्त्यनुदयान्मनोनश्यति॥तदिदंमनोना
शवासनाक्षयद्वंद्वं॥दृश्यतेत्वग्र्ययाबुद्ध्याइतिश्रुतेरैकाग्र्याभि
मुखवृत्तेर्दर्शनहेतुत्वादितरवृत्तिनाशस्यतत्त्वज्ञानहेतुत्व

मवगम्यते॥सतिचतत्त्वज्ञानेमिथ्याभूतेजगतिनरविषाणादावि
वधीहस्यनुदयादात्मनश्चदृष्टत्वेनपुनर्दृश्यत्वनुपयोगान्निरंधना
ग्निवन्मनोनश्यति॥तदिदंमनोनाशतत्त्वज्ञानयोर्द्वंद्वं॥तत्त्वज्ञा
नस्यक्रोधादिवासनाक्षयहेतुतांवार्त्तिककारआह॥रिपौबंधौ
स्वदेहेचसमैकात्म्यंप्रपश्यतः॥विवेकिनःकुतःकोपःस्वदेहाव
यवेष्विवेति॥क्रोधादिवासनाक्षयरूपस्यशमादेर्ज्ञानहेतुत्वं
प्रसिद्धं॥वसिष्ठोपि॥गुणाःशमादयोज्ञानाच्छमादिभ्यस्तथाज्ञता॥
परस्परंविवर्द्धंतेह्येयपद्मसरसीइव॥तदिदंवासनाक्षयतत्त्वज्ञान
योर्द्वंद्वं॥तत्त्वज्ञानादीनांत्रयाणांसंपादनेसाधनमाह॥तस्माद्राघ
वयत्नेनपौरुषेणविवेकिना॥भोगेच्छांदूरतस्त्यक्त्वात्रयमेतत्समा
श्रयेदिति॥पौरुषोयत्नःकेनाप्युपायेनावश्यंसंपादयिष्यामीत्ये
वंविधोत्साहरूपोनिर्बंधः॥विवेकोनामविभज्यनिश्चयः॥तत्त्व
ज्ञानस्यश्रवणादिकंसाधनंमनोनाशस्ययोगः॥वासनाक्षयस्य
प्रतिकूलवासनोत्पादनमिति॥भोगेच्छायाःस्वल्पायाअभ्युपग
मेहविषाकृष्णवर्त्मेवभूयएवाभिवर्द्धते इतिन्यायेनातिप्रसंग
स्यदुर्वारत्वाद्दूरतइत्युक्तं॥ननुपूर्वत्रविविदिषासंन्यासस्यतत्त्व
ज्ञानफलंविद्वत्संन्यासस्यजीवन्मुक्तिरितिव्यवस्थितावर्णिता॥
तथाचसतिप्रथमतःतत्त्वज्ञानंसंपाद्यपश्चाद्विद्वत्संन्यासंकृत्वा
जीवतःस्वस्यबंधरूपयोर्वासनामनोहस्योर्विनाशःसंपादनी॥
यइतिप्रतिभाति॥अत्रतुतत्त्वज्ञानादीनांसहैवाभ्यासोनियम्य
ते॥अतःपूर्वोत्तरविरोधइतिचेत्॥नायंदोषः॥प्रधानोपसर्जन
भावेनव्यवस्थोपपत्तेः॥ विविदिषासंन्यासिनस्तत्त्वज्ञानंप्रधानंम
नोनाशवासनाक्षयावुपसर्जनीभूतौ॥विद्वत्संन्यासिनस्तुतद्वैपरी॥
सं॥अतःसहाभ्यासःउभयत्राप्यविरुद्धः॥नचतत्त्वज्ञानोत्पत्ति
मात्रेणकृतार्थस्यकिमुत्तरकालीनेनाभ्यासप्रयासेनेतिशंकनी
यंजीवन्मुक्तिप्रयोजननिरूपणेनपरिहरिष्यमाणत्वात्॥ननुवि
द्वत्संन्यासिनोवेदनसाधनश्रवणाद्यनुष्ठानवैकल्याद्वेदनस्यच
स्वरूपेणकर्तुमकर्तुमन्यथाकर्तुमशक्यस्याननुष्ठेयत्वात्॥उपस

जैनेनाप्युत्तरकालीनोभ्यासः कीदृश इति चेत्। केनापि द्वारेण पुनः
पुनस्तत्त्वानुस्मरणमिति ब्रूमः॥ तादृशश्चाभ्यासो लीलोपाख्याने द
र्शितः॥ तच्चिंतनं तत्कथनमन्योन्यं तत्प्रबोधनं॥ एतदेकपरत्वं च
ज्ञानाभ्यासं विदुर्बुधाः॥ सर्गादावेव नोत्पन्नं दृश्यं नास्त्येव तत्सदा
॥ इदं जगदहं चेति बोधाभ्यासं विदुः परमिति॥ ननु मनोनाशवास
नाक्षयाभ्यासावपि तत्रैव दर्शितौ॥ अत्यंताभावसंपत्तौ ज्ञातुर्ज्ञेय
स्य वस्तुनः॥ युक्त्या शास्त्रैर्यतंते ये तेऽत्राभ्यासिनः स्थिता इति॥ ज्ञा
तृज्ञेययोर्मिथ्यात्वधीरभावसंपत्तिः स्वरूपेणाप्यप्रतीतिरत्यंता
भावसंपत्तिर्युक्तिर्योगः सोयं मनोनाशाभ्यासः॥ दृश्यासंभवबो
धेन रागद्वेषादितानवे॥ रतिर्नवोदिता यासौ ब्रह्माभ्यासः स उच्य
ते॥ सोयं वासनाक्षयाभ्यासः॥ तेष्वेतेषु त्रिष्वभ्यासेषु साम्येन प्रती
यमानेषु प्रधानोपसर्जनभावेन न विवेक्तुं शक्यत इति चेत्। मैवं
॥ प्रयोजनानुसारेण विवेक्तुं शक्यत्वात्॥ मुमुक्षोः पुरुषस्य जीव
न्मुक्तिर्विदेहमुक्तिश्चेति द्वयं प्रयोजनं॥ अत एव विमुक्तश्च वि
मुच्यत इति श्रूयते॥ तत्र जीवतः पुरुषस्य दैवसंपदा मोक्षः॥
आसुरसंपदा बंधः॥ एतच्च षोडशाध्याये भगवताभिहितम्॥ दै
वी संपद्विमोक्षाय निबंधायासुरी मतेति॥ ते च संपदौ तत्रैवाभि
हिते॥ अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः॥ दानं दमश्च
यज्ञश्च स्वाध्यायस्तप आर्जवं॥ अहिंसा सत्यमक्रोधस्त्यागः शां
तिरपैशुनं॥ दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलं॥ तेजः क्षमा
धृतिः शौचमद्रोहो नातिमानिता॥ भवंति संपदं दैवीमभिजात
स्य भारत॥ दंभो दर्पोभिमानश्च क्रोधः पारुष्यमेव च॥ अज्ञानं चा
भिजातस्य पार्थ संपदमासुरीमिति॥ पुनरपि आध्यायपरिसमा
प्तेरासुरसंपत्प्रपंचिता॥ तत्र अशास्त्रीयायाः स्वभावसिद्धाया
आसुरसंपदो दुर्वासनायाः शास्त्रीयया पुरुषप्रयत्नसाध्यया दैव
संपदा सद्वासनया क्षये सति जीवन्मुक्तिर्भवति॥ वासनाक्षयव
न्मनोनाशस्यापि जीवन्मुक्तिहेतुत्वं श्रूयते॥ मन एव मनुष्याणां
कारणं बंधमोक्षयोः॥ बंधाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतं॥

यतोनिर्विषयस्यास्यमनसोमुक्तिरिष्यते॥अतोनिर्विषयंनित्यंम
नःकार्यंमुमुक्षुणा॥निरस्तविषयासंगंसन्निरुद्धंमनोहृदि॥यदा
यात्युन्मनीभावंतदातत्परमंपदं॥तावदेवनिरोद्धव्यंयावद्धृदिगतं
क्षयं॥एतज्ज्ञानंचध्यानंचशेषोन्यायस्यविस्तरइति॥बंधोद्विवि
धः॥तीव्रोमृदुश्च॥तत्रासुरसंपत्तासादेवक्लेशहेतुत्वात्तीव्रोबं
धः॥द्वैतमात्रप्रतीतिस्तुस्वयमक्लेशरूपत्वादासुरसंपदुत्पाद
कत्वाच्चमृदुबंधः॥तत्रवासनाक्षयेणतीव्रबंधएवनिवर्त्यते॥
मनोनाशेनतूभयं॥तर्हिमनोनाशेनैवालंवासनाक्षयस्तुनिरर्थकइ
तिचेत्॥नभोगहेतुनाप्रबलेनप्रारब्धेनव्युत्थापितेमनसिवासना
क्षयस्यतीव्रबंधनिवारणार्थत्वात्॥भोगस्यमृदुबंधेनाप्युपपत्तेः
॥तामसराजसस्तीव्रबंधःसात्विकएवसद्वृत्तिरूपंमृदुबंधः॥ए
तच्च॥दुःखेष्वनुद्विग्नमनाःसुखेषुविगतस्पृहइत्यत्रस्पष्टीकृतं
॥एवंचसतिमृदुबंधस्याप्युपेयत्वात्तीव्रबंधस्यवासनाक्षयेणैव
निवृत्तेरनर्थकोमनोनाशइतिचेन्न॥दुर्बलप्रारब्धापादितानाम
वश्यंभाविभोगानांप्रतीकार्यत्वात्॥तादृग्भोगस्यप्रतीकारनिर्व
र्त्यत्वमभिप्रेत्येदमाहुः॥अवश्यंभाविभावानांप्रतीकारोभवेद्यदि
॥तदादुःखैर्नलिप्येरन्नलरामयुधिष्ठिराइति॥तदेवंजीवन्मुक्तिं
प्रतिवासनाक्षयमनोनाशयोःसाक्षात्साधनत्वात्प्राधान्यम्॥त
त्वज्ञानंतुतयोरुत्पादनेनव्यवहितत्वात्उपसर्जनम्॥तत्वज्ञान
स्यवासनाक्षयहेतुत्वंबहुशःश्रुतौश्रूयते॥ज्ञात्वादेवंसर्वपाशा
पहानिःक्षीणैःक्लेशैर्जन्ममृत्युप्रहाणिः॥अध्यात्मयोगाधिगमेन
देवंमत्वाधीरोहर्षशोकौजहाति॥तरतिशोकमात्मवित्॥तत्र
कोमोहःकःशोकएकत्वमनुपश्यतः॥ज्ञात्वादेवंमुच्यतेसर्वपाशै
रिति॥मनोनाशहेतुत्वंचतत्वज्ञानस्यश्रुतिसिद्धम्॥विद्वद्दशा
मभिप्रेत्येदंश्रूयते॥यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येत्।
त्केनकंजिघ्रेदित्यादि॥गौडाचार्याश्चाहुः॥आत्मतत्वानुबो
धेननसंकल्पयतेतदा॥अमनस्तांतदायातिग्राह्याभावेतद
ग्रहइति॥जीवन्मुक्तेर्वासनाक्षयमनोनाशाविवविदेहमुक्तेः

साक्षात्साधनत्वाज्ज्ञानंप्रधानं॥ज्ञानादेवतुकैवल्यंप्राप्यतेयेनमु
च्यतेइतिस्मृतेः॥केवलस्यात्मनोभावःकैवल्यंदेहादिरहित
त्वंतच्चज्ञानादेवप्राप्यते॥स्वदेहस्याज्ञानकल्पितत्वेनज्ञानैक
निवर्त्यत्वात्ज्ञानादेवेतिएवकारेणकर्मव्यावृत्तिः॥नकर्मणान
प्रजयेतिश्रुतेः॥यत्तुज्ञानशास्त्रमनभ्यस्यतश्चासंभवंवासनाक्ष
यमनोनाशावभ्यस्यसगुणंब्रह्मोपास्तेनतस्यकैवल्यमस्तिलिं
गदेहस्यानपायात्॥अतःएवकारेणतावपिव्यावर्त्यते॥येनमुच्य
तइत्यस्यायमर्थः॥येनज्ञानप्रापितत्वेनकेवलत्वेनहृतत्संबंधा
द्विमुच्यतइति॥बंधश्चानेकविधः॥अविद्याग्रंथिरब्रह्मत्वं॥हृ
दयग्रंथिःसंशयाः॥कर्माण्यसर्वकामत्वंमृत्युःपुनर्जन्मेति॥आ
दिशब्दैस्तत्रतत्रव्यवहारात्॥अज्ञानतस्तेबंधाःसर्वेज्ञाननिव
र्त्याः॥तथाचश्रुतयः॥एतद्योवेदनिहितंगुहायांसोऽविद्याग्रंथिंवि
किरतीह सौम्य॥ब्रह्मवेदब्रह्मैवभवति॥भिद्यतेहृदयग्रं॰पराव
रे॥योवेदनिहितंगुहायांपरमेव्योमन्॥सोऽश्नुतेसर्वान्कामान्स
ह॥तमेवंविदित्वातिमृत्युमेति॥यस्तुविज्ञानवान्भवतिसमनस्कःस
दाशुचिः॥सतुतत्पदमाप्नोतियस्माद्भूयोनजायते॥यएवंवेदाहंब्र
ह्मास्मीतिसइदंसर्वंभवतीत्यादीन्यसर्वज्ञत्वादिबंधनिवृत्तिपरा
णिवाक्यान्यत्रोदाहरणीयानि॥सेयंविदेहमुक्तिर्ज्ञानोत्पत्तिसमका
लीनाऽशेषा॥ब्रह्मण्यविद्यारोपितानामेतेषांबंधानांविद्ययाविनाशे
सतिपुनरुत्पत्त्यसंभवादनुभवाच्च॥तदेतद्विद्यासमकालत्वंभाष्य
कारः समन्वयसूत्रेप्रपंचयामास॥तदधिगमउत्तरपूर्वाघयोरश्ले
षविनाशौतद्व्यपदेशादिति॥ननुवर्त्तमानदेहपातानंतरंभाविनीं
विदेहमुक्तिरितिबहवोवर्णयंति॥तथाचश्रुतिःतस्यतावदेवचि
रंयावन्नविमोक्ष्येऽथसंपत्स्यइति॥वाक्यवृत्तावप्युक्तम्॥प्रारब्ध
कर्मवेगेनजीवन्मुक्तोयदाभवेत्॥कंचित्कालमनारब्धकर्मबंध
स्यसंक्षये॥निरस्तातिशयानंदंवैष्णवंपरमंपदम्॥पुनरावृत्तिरहि
तंकैवल्यंप्रतिपद्यतइति॥सूत्रकारोप्याह॥भोगेनत्वितरेक्षपयि
त्वासंपद्यतइति॥इतरेप्रारब्धपुण्यपापे॥वसिष्ठोप्याह॥जीवन्मु

त्मपदं त्यक्त्वा स्वदेहे कालसात्कृते॥ विशुक्तदेहमुक्तत्वं पवनोस्पंदतामिवेति॥ नायं दोषः॥ विवक्षाविशेषेण मतद्वयस्याविरोधात्॥ विदेहमुक्तिरित्यत्रेत्यनेन देहशब्देन कृत्स्नदेहजातं विवक्षितत्वा द्वदभिर्वर्णितं॥ अस्माभिस्तु भाविदेहमात्रविवक्षयोच्यते तदना रंभायैव ज्ञानसंपादनात्॥ अयं तु देहः पूर्वमेवारब्धः अतो ज्ञानेनापि नास्यारंभो वारयितुं शक्यते॥ एतद्देहनिवृत्तिरपि न ज्ञानफलं॥ अज्ञानिनामपि आरब्धकर्मक्षये तन्निवृत्तेः तर्हि वर्तमानलिंगदेहनिवृत्तिर्ज्ञानफलमस्तु ज्ञानमंतरेण तदनिवृत्तेरितिचेत् न तस्यापि ज्ञानेजीवन्मुक्तेतन्निवृत्त्यभावात्॥ ननु ज्ञानस्य कंचित्कालं प्रारब्धकर्मणाभिभूतत्वेनानिवर्तकत्वेपि मतिबंधक्षये लिंगदेहनिवर्तकत्वं भविष्यतीतिचेत्॥ न पंचपादिकाचार्येण यतो ज्ञानमज्ञानस्यैव निवर्तकमिति उपपादितत्वात्॥ तर्हि लिंगदेहनिवृत्तेः किं साधनमितिचेत् सामग्री निवृत्तिरिति ब्रूमः॥ द्विविधं हि कार्यनिवर्तकं॥ विरोधिसद्भावः सामग्री निवृत्तिश्चेति॥ तद्यथा विरोधिना वायुना तैलवर्तिसामग्रीनिवृत्त्या वा दीपो निवर्तते॥ लिंगदेहस्य साक्षाद्विरोधिनं न पश्यामः॥ सामग्री हि द्विविधा॥ प्रारब्धमनारब्धं चेति॥ ताभ्यामुभाभ्यामज्ञानिनां लिंगदेहो हामुत्र चावतिष्ठते॥ ज्ञानिनां त्वनारब्धस्य ज्ञानेन निवृत्तेः प्रारब्धस्य च भोगेन निवृत्तेः तैलवर्तिरहितदीपवत्सामग्रीनिवृत्त्या लिंगदेहो निवर्तते अतो तन्निवृत्तिर्ज्ञानफलं॥ ननु अनेन न्यायेन भाविदेहानारंभोपि ज्ञानफलं॥ तथा हि किमनारंभ एव वा हि फलं किं वा तस्य प्रतिपालनं॥ नाद्यः॥ तस्य प्रागभावरूपत्वेनानादिसिद्धत्वात्॥ न द्वितीयः अनारब्धकर्मरूपसामग्रीनिवृत्त्यैव भाविदेहारंभप्रागभावप्रतिपालनसिद्धेः न च तन्निवृत्तिः फलं॥ अविद्यानिवृत्तेरेव विद्याफलत्वात् नैष दोषः॥ भाविजन्मानारंभादीनां विद्याफलत्वस्य प्रामाणिकत्वात्॥ यस्माद्भूयो न जायत इत्युदाहृताः श्रुतयस्तत्र प्रमाणं॥ न च ज्ञानमज्ञानस्यैव निवर्तकमिति न्यायेन विरोधः॥ अज्ञानसहभावनियतानामत्र ह्यस्तादीनामज्ञानशब्देन पंचपादिकाचार्यैर्विवक्षितत्वात्॥ अन्यथा तु भवंवि

रोधात्॥ अनुभूयते त्वज्ञाननिवृत्तिवद्ब्रह्मलोकादिनिवृत्तिरपि तस्माद्वा
विदेहैरहित्यलक्षणा विदेहमुक्तिर्ज्ञानसमकालीना॥ तथा च या
ज्ञवल्क्यवचनं श्रूयते॥ अभयं वै जनक प्राप्तोसीति एतावदरे।
खल्वमृतत्वमिति च॥ श्रुत्यंतरेपि॥ तमेवं विद्वानमृत इह भवतीति
यद्युच्यन्नेपि तत्त्वज्ञाने तत्फलभूता विदेहमुक्तिस्तदानीं न भवेत्
॥ अथोच्येत कालांतरे च भवेत्॥ तदा ज्योतिष्टोमादाविव ज्ञानज
न्यमपूर्वं किंचित्कल्प्येत॥ तथा च कर्मशास्त्र एव ज्ञानशास्त्रमंतर्भवे
त्॥ अथोच्येत मंत्रादिप्रतिबद्धाग्निवत्प्रारब्धप्रतिबद्धं ज्ञानं कालां
तरे विदेहमुक्तिं दास्यतीति मैवं अविरोधात्॥ न ह्यस्मदभिमता भा
विदेहात्यंताभावलक्षणा विदेहमुक्तिर्वर्त्तमानदेहमात्रस्यापक
त्वेन प्रारब्धेन विरुध्यते॥ येन प्रतिबध्येत किंच क्षणिकत्वेन कालां
तरे स्वयमविद्यमानं ज्ञानं कथं मुक्तिं दद्यात्॥ ज्ञानांतरं चरमब्र
ह्मसाक्षात्कारलक्षणमुत्पत्स्यत इति चेत्॥ न साधनाभावात्॥ प्र
तिबंधकप्रारब्धनिवृत्तैवसद्गुरुशास्त्रदेहेंद्रियाद्युपेष जगत्प्र
तिभानिवृत्तेः किं तत्साधनं स्यात्॥ तर्हि भूयश्चांते विश्वमायानिवृ
त्तिरित्यस्याः श्रुतेः कोर्थ इति चेत्॥ आख्यातें निमित्ताभावाद्देहें
द्रियाद्युपेषनैमित्तिकनिवृत्तिरित्येवार्थः॥ ततो भवदभिमता वर्तमा
नदेहराहित्यलक्षणा विदेहमुक्तिः पश्चाद्वस्तु देहपातानंतरं॥ अ
स्मदभिमता तु ज्ञानसमकालीनैव॥ एतदेवाभिप्रेत्य भगवान्शेषआ
ह॥ तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि त्यजन्देहं॥ ज्ञानसमकालमे
व कैवल्यं याति हतशोक इति॥ तस्माद्विदेहमुक्तौ साक्षात्साधनस्य
तत्त्वज्ञानस्य प्रधानत्वमुपपन्नं वासनाक्षयमनोनाशयोर्ज्ञानसाध
नत्वेन व्यवहितत्वादुपसर्जनत्वं॥ आसुरवासनाक्षयकारिण्या दै
ववासनाया ज्ञानसाधनत्वं श्रुतिस्मृत्योरुपलभ्यते॥ शांतो दांत उप
रतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यतीति श्रुतिः॥ स्मृ
तिरपि॥ अमानित्वमदंभित्वमहिंसा क्षांतिरार्जवं॥ आचार्योपास
नं शौचं स्थैर्यमात्मविनिग्रहः॥ इंद्रियार्थेषु वैराग्यमनहंकार एव
च॥ जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्॥ असक्तिरनभिष्वंगः

पुत्रदारगृहादिषु॥ नित्यंचसमचित्तत्वमिष्टानिष्टोपपत्तिषु॥ मयिचा
नन्ययोगेनभक्तिरव्यभिचारिणी॥ विविक्तदेशसेवित्वमरतिर्जनसंस
दि॥ अध्यात्मज्ञाननित्यत्वंतत्वज्ञानार्थदर्शनम्॥ एतज्ज्ञानमितिप्रो
क्तमज्ञानंयदतोन्यथेति॥ अस्मिन्नहंबुद्धिरभिषंगः॥ ज्ञायतेऽ
नेनेतिव्युत्पत्त्याज्ञानसाधनमित्यर्थः॥ मनोनाशस्यापिज्ञानसाध
नत्वंश्रुतिस्मृतिसिद्धं॥ ततस्तुतंपश्यतिनिष्कलंध्यायमानइतिश्रु
तिः॥ अध्यात्मयोगाधिगमेनदेवंमत्वाधीरोहर्षशोकौजहातीतिच
प्रत्यगात्मसमाधिप्राप्त्यादेवंज्ञात्वेत्यर्थः॥ यंविनिद्राजितश्वासाःसं
तुष्टाःसंयतेंद्रियाः॥ ज्योतिःपश्यंतियुंजानास्तस्मैविद्यात्मनेनम
इतिस्मृतिः॥ तदेवंतत्वज्ञानादीनांत्रयाणांविदेह मुक्तिजीवन्मु
क्तिवशाद्गुणप्रधानोपसर्जनभावव्यवस्थासिद्धा॥ ननुविविदिषा
संन्यासिनासंपादितानामेतेषांकिंविद्वत्संन्यासादूर्ध्वमनुवृत्तिमा
त्रंकिंवापुनरपिसंपादनप्रयत्नोपेक्षितः॥ नाद्यः॥ तत्वज्ञानस्येवा
न्ययोरप्युपत्तिसिद्धत्वेप्राधान्यप्रयुक्तादराभावप्रसंगात्॥ नद्विती
यः॥ इतरयोरिवज्ञानस्यापियत्नसापेक्षत्वेसत्युपसर्जनत्वमस्तु
कौदासीन्याभावप्रसंगात्॥ नायंदोषः॥ ज्ञानस्यानुवृत्तिमात्रमितर
योर्यत्नसाध्यत्वमित्यंगीकारात्॥ तथाहि॥ विद्याधिकारीद्वि
धः॥ कृतोपास्तिरकृतोपास्तिश्चेति॥ तत्रोपास्यसाक्षात्कारपर्यंता
मुपास्तिंकृत्वायदिज्ञाने प्रवर्ततेतदावासनाक्षयमनोनाशयोर्दृ
ढतरत्वेनज्ञानादूर्ध्वंविद्वत्संन्यासजीवन्मुक्तीस्वतएवसिध्यतः॥ ता
दृशएवशास्त्राभिमतोमुख्योविद्याधिकारीततस्तंप्रतिशास्त्रेषुस
होपन्यासात्॥ स्वस्वरूपेणविविक्तावपिविद्वत्संन्यासविविदि
षासंन्यासौसंकीर्णाविवभासेते॥ इदानींतनास्तुप्रायेणाकृतोपा
स्तयएवौत्सुक्यमात्रात्सहसाविद्यायांप्रवर्ततेवासनाक्षयमनोना
शौचतात्कालिकौसंपादयंतितावताश्रवणमनननिदिध्यासना
निनिष्पद्यंते॥ तैश्चदृढाभ्यस्तैरज्ञानसंशयविपर्ययनिरासात्तत
त्वज्ञानंसम्यगुदेति॥ उदितस्यज्ञानस्यबाधकप्रमाणाभावान्निवृ
त्ताविद्यायाःपुनरुत्पत्तिकारणाऽभावाच्चनास्तितस्यशैथिल्यंवा

सवासनाक्षयमनोनाशौ तु दृढाभ्यासाभावाद्भोगप्रदेन प्रारब्धेन तदा त
दा बाध्यमानत्वाच्च ॥ सवातप्रदेशदीपवत्सहसा निवर्तेते ॥ तथा
च वसिष्ठः ॥ पूर्वैर्भ्यस्तु प्रयत्नेभ्यो विषमोयं हि संमतः ॥ दुःसाध्यो
वासनात्यागः सुमेरून्मूलनादपीति ॥ अर्जुनोपि ॥ चंचलं हि मनः
कृष्ण प्रमाथि बलवद्दृढं ॥ तस्याहं निग्रहं मन्ये वायोरिव सुदुष्कर
मिति ॥ तस्मादिदानीं तत्त्वज्ञानं विद्वत्संन्यासिनां ज्ञानस्यानुवृत्तिमात्रं ।
वासनाक्षयमनोनाशौ तु प्रयत्नसंपाद्याविति स्थितं ॥ ननु केयं वा
सना तस्याः क्षयाय प्रयतितव्यमिति चेत् ॥ तत्स्वरूपमाह ॥ वसिष्ठः ॥
दृढभावनया त्यक्त पूर्वापरविचारणम् ॥ यदादानं पदार्थस्य वास
ना सा प्रकीर्तिता ॥ भावितं तीव्रसंवेगादात्मना यत्तदेव सः ॥ भवत्या
शु महाबाहो विगतेतरसंस्मृतिः ॥ तादृक्रूपो हि पुरुषो वासनावि
वशीकृतः ॥ संपश्यति यदेवैतत्सद्वस्त्विति विमुह्यति ॥ वासनावे
गतो वश्यात्स्वरूपं प्रजहाति तत् ॥ भ्रांतं पश्यति दुर्दृष्टिः सर्वं मदव
शादिवेति ॥ प्रवृत्तिं च निवृत्तिं च० असत्यमप्रविष्टं ते० एतां दृष्टिम
वष्टभ्य० ॥ अत्र च स्वस्वदेशाचारभाषाकुलधर्मभेदतद्गतापशब्द
सुशब्दादिषु प्राणिनामभिनिवेशः ॥ सामान्यत उदाहरणं विशेष
स्तु भेदाद्यनुक्ता पश्चादुदाहरिष्यामः ॥ यथोक्तां वासनामभिप्रेत्य बृहदा
रण्यके श्रूयते ॥ स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति त
त्कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यत इति ॥ वासनाभेदो वा
ल्मीकिना दर्शितः ॥ वासना द्विविधा प्रोक्ता शुद्धा च मलिना तथा ॥
मलिना जन्महेतुः स्याच्छुद्धा जन्मविनाशिनी ॥ अज्ञानसुघना
कारा घनाहंकारशालिनी ॥ पुनर्जन्मकरी प्रोक्ता मलिना वासना
बुधैः ॥ पुनर्जन्मांकुरं त्यक्ता स्थिता संभृष्टबीजवत् ॥ देहार्थं ध्रि
यते ज्ञातज्ञेया शुद्धेति चोच्यत इति ॥ देहादीनां पंचकोशानां त
त्साक्षिणश्चिदात्मनश्च भेदावरकमज्ञानं तेन सुष्ठु घनीभूत आ
कारो यस्याः सेयमज्ञानसुघनाकारा ॥ यथा क्षीरं तक्रमेलनेन घ
नीभवति यथा विलीनं घृतमस्तं तशीतलप्रदेशे चिरमवस्थापि
तं सुष्ठु घनीभवति तथा वासना द्रष्टव्या ॥ घनीभावश्चात्र भ्रांति

परं पदं तां चासुरसंपद्विवरणे भगवानाह॥ प्रवृत्तिं च निवृत्तिं चेति षो
डशाध्यायोक्तश्लोकत्रयक्रमेण पठित्वाऽन्ये पठनीयम्॥ काममाश्रि
त्य दुष्पूरं दंभमानमदान्विताः॥ मोहाद्गृहीत्वाऽसद्ग्राहान्प्रवर्तंते
शुचिव्रताः॥ चिंतामपरिमेयां च प्रलयांतामुपाश्रिताः॥ कामोपभो
गपरमा एतावदिति निश्चिताः॥ आशापाशशतैर्बद्धाः कामक्रोध
परायणाः॥ ईहंते कामभोगार्थमन्यायेनार्थसंचयानिति॥ घनाहं
कारश्च तत्रैवोदाहृतः॥ इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथं॥
इदमस्तीदमपि मे भविष्यति पुनर्धनं॥ असौ मया हतः शत्रुर्हनि
ष्ये चापरानपि॥ ईश्वरोहमहं भोगी सिद्धोहं बलवान्सुखी॥ आढ्यो
भिजनवानस्मि कोन्योस्ति सदृशो मया॥ यक्ष्ये दास्यामि मोदिष्य
इत्यज्ञानविमोहिताः॥ अनेकचित्तविभ्रांता मोहजालसमावृताः
॥ प्रसक्ताः कामभोगेषु पतंति नरकेऽशुचाविति॥ एतेन पुनर्जन्म
करत्वमुदाहृतं भवति॥ तत्र जन्मकरत्वं पुनः प्रपंचितम्॥ आत्म
संभाविताः स्तब्धा धनमानमदान्विताः॥ यजंते नामयज्ञैस्ते दंभे
नाविधिपूर्वकं॥ अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः॥
मामात्मपरदेहेषु प्रद्विषंतोभ्यसूयकाः॥ तानहं द्विषतः क्रूरान्सं
सारेषु नराधमान्॥ क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु॥ आ
सुरीं योनिमापन्ना मूढा जन्मनि जन्मनि॥ मामप्राप्यैव कौंतेय त
तो यांत्यधमां गतिमिति॥ शुद्धवासनानुज्ञातज्ञेया॥ ज्ञेयस्वरू
पं तत्र योदशाध्याये भगवानाह॥ ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वा
मृतमश्नुते॥ अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते॥ सर्वतः पा
णिपादं तत्सर्वतोक्षिशिरोमुखं॥ सर्वतः श्रुतिमल्लोके सर्वमावृ
त्य तिष्ठति॥ सर्वेंद्रियगुणाभासं सर्वेंद्रियविवर्जितं॥ असक्तं स
र्वभृच्चैव निर्गुणं गुणभोक्तृ च॥ बहिरंतश्च भूतानामचरं चरमेव
च॥ सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चांतिके च तत्॥ अविभक्तं च भू
तेषु विभक्तमिव च स्थितं॥ भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु
च॥ ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यत इति॥ अत्र तट
स्थलक्षणस्वरूपलक्षणाभ्यामवगंतुं सोपाधिकनिरुपाधिक

स्वरूपमुपपन्नतमम्॥कदाचित्संबंधिसम्यक्लक्षयति तत्तस्य
लक्षणं॥यथाकाकवद्देवदत्तगृहं॥तथाकालत्रयसंबंधिसम्यक्ल
क्षयति तत्स्वरूपलक्षणं॥यथाप्रकृष्टप्रकाशश्चंद्र इति॥ननुसकृ
पूर्वापर्यविचारत्वं वासनालक्षणमुक्तं॥इदंज्ञानंचविचारजन्यम्
अतोनशुद्धयांतल्लक्षणमस्ति॥मैवं॥लक्षणेदृढभावनयेत्युक्तत्वा
त्॥यथाबहुजन्मसुदृढभावितत्वेनास्मिञ्जन्मनिविनैवपरोपदे
शमहंकारममकारकामक्रोधादयोमलिनवासनाउत्पद्यंते॥त
थाभ्यासिकस्यबोधस्यविचारजन्यत्वेपिदीर्घकालनैरंतर्यसत्का
रभावितत्वेपश्चाद्वाक्ययुक्तिपरामर्शमंतरेणैवपुरोवर्तिघटादि
वत्सहसातत्त्वंपरिस्फुरति॥तादृश्यातुबोधानुवृत्त्यासहितइंद्रिय
व्यवहारःशुद्धवासनासाचदेहजीवनमात्रायोपयुज्यते॥नतुदं
भदर्पाद्यासु रसंपदुत्पादनाय॥नापिजन्मांतरहेतुधर्माधर्मो
त्पादनाय॥यथासंभृष्टानिव्रीह्यादिबीजानिकुसूलपूरणमात्रा
त्रायोपयुक्तानि॥नतुरूढिकरणायनापिसस्यनिष्पत्तयेतद्वत्
मलिनाचवासनात्रिविधा॥लोकवासनाशास्त्रवासनादेहवासना
चेति॥सर्वेजनायथानिंदंतियथाचस्तुवंतितथैवसर्वदाचरिष्या
मीत्यभिनिवेशोलोकवासना॥तस्याश्चसंपादयितुमशक्यत्वात्
मलिनत्वं॥तथाहिकोन्वस्मिन्सांप्रतंलोकेगुणवान्कश्चवीर्यवा
नित्यादिनाबहुधावाल्मीकिःपप्रच्छ॥इक्ष्वाकुवंशप्रभवोरामोना
मजनैःश्रुतइत्यादिनास्योत्तरंनारदोददौ॥तादृशस्यापिरामस्य
पातिव्रत्यशिरोमणिभूतायाःजगन्मातुःसीतायाश्चश्रोतुमशक्यो
जनापवादःसंवृत्तः किमुवक्तव्यमन्येषां॥तथादेशविशेषेणप
रस्परंनिंदाबहुलमुपलभ्यते॥दाक्षिणात्यैर्विप्रैरौत्तरीयावेदविदो
विप्रामांसभक्षणान्निंद्यंते॥औत्तरेयैश्चमातुलसुतोद्वाहिनोयात्रा
सुमृद्भांडवाहिनोदाक्षिणात्यानिंद्यंते॥बह्वृचाआश्वलायनशा
खांकण्वशाखायाःप्रशस्तांमन्यंते॥वाजसनेयिनस्तुवैपरीत्येन॥
एवंस्वस्वकुलगोत्रबंधुवर्गेष्टदेवतादिप्रशंसापरकीयनिंदाचवि
द्वांसमारभ्यआंगनागोपालंसर्वत्रप्रसिद्धा॥एतदेवाभिप्रेत्योक्तं॥

शुचिःपिशाचोविचलोविचक्षणःक्षमोप्यशक्तोबलवांश्चदुष्टः॥नि
श्चितचोरःसुभगोपिकामीकोलोकमाराधयितुंसमर्थइति॥विद्य
तेनखलुकश्चिदुपायःसर्वलोकपरितोषकृत्तोयः॥सर्वथास्वहि
तमाचरणीयंकिंकरिष्यतिजनोबहुजल्पइति॥लोकवासनाया
मलिनत्वमभिप्रेत्ययोगीश्वरस्यतुल्यनिंदास्तुतित्वंमोक्षशास्त्रेषु
वर्णितं॥शास्त्रवासनात्रिविधा॥पाठव्यसनंशास्त्रव्यसनमनुष्ठान
व्यसनंचेति॥पाठव्यसनंभरद्वाजेवगम्यते॥सहिपुरुषायुषत्रयेण
बहून्वेदानधीत्यैंद्रेणचतुर्थायुषिप्रलोभितस्तत्रापिपरिशिष्टवेदा
ध्ययनायोद्यमंचकार॥तस्यापिपाठस्याशक्यत्वान्मलिनत्वम्॥
तांचाशक्तिमिंद्रःप्रतिबोध्यपाठान्निवर्त्यततोप्यधिकायपुरुषा
र्थायसगुणब्रह्मविद्यामुपदिदेशेतिदेतत्सर्वंतैत्तिरीयब्राह्मणेद्र
ष्टव्यं॥भरद्वाजोह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास॥तंहजीर्णंस्थ
विरंशयानं॥इंद्रउपव्रज्योवाच॥भरद्वाजय॥तेचतुर्थमायुर्दद्यां
॥किमनेनकुर्याइति॥ब्रह्मचर्यमेवैनेनचरेयमितिहोवाच॥तंहत्रीन्
गिरिरूपानविज्ञातानिवदर्शयांचकार॥तेषांहैकैकस्मान्मुष्टिना
ददे॥सहोवाच॥भरद्वाजेत्यामंत्र्यवेदावाएते॥साधुज्यंयथा॥तथै
वात्यंतिकपुरुषार्थाभावात्॥बहुशास्त्रव्यसनस्यमालिन्यंकावषे
यगीतायामुपलभ्यते॥कश्चिन्मुनिर्दुर्वासाबहुविधशास्त्रपुस्तक
भारैःसहमोक्षशास्त्रेष्ववर्णितमहादेवंनमस्कर्तुमागत्यतत्सभायां
मुनिनानारदेनभारवाहीगर्दभस्ताम्यमापादितःकोपात्पुस्तकानिल
वणार्णवेपरित्यज्यमहादेवेनात्मविद्यायांप्रवर्तितइति॥आत्मवि
द्यानंत— र्मुखस्यगुरुकारुण्यरहितस्यनवेदशास्त्रमात्रेणात्मद्यु
ते॥तथाचश्रुतिः॥नायमात्माप्रवचनेनलभ्योनमेधयानबहुना
श्रुतेनेति॥अन्यत्राप्युक्तम्॥बहुशास्त्रकथाकंथारोमंथेनवृथैव
किं॥अन्वेष्टव्यंप्रयत्नेनतत्त्वज्ञैर्ज्योतिरांतरमिति॥अधीत्यचतुरो
वेदान्धर्मशास्त्राण्यनेकशः॥ब्रह्मतत्त्वंनजानातिदर्वीपाकरसं
यथेति॥नारदश्चतुःषष्टिविद्याकुशलोपिअनात्मवित्त्वेनानुतप्तः
सनत्कुमारमुपससादेतिछंदोगाअधीयते॥अनुष्ठानव्यसनंवि

ष्णुपुराणे निदाघस्योपलभ्यते ॥ वासिष्ठपुराणे दाशूरस्यनिदाघोऽरभु
णापुनःपुनर्बोध्यमानोपिकर्मश्रद्धाजाड्यं चिरंनजहौ ॥ दाशूरश्चा
स्यंतश्रद्धाजाड्येनानुष्ठानायशुद्धप्रदेशंभूमौनक्वाप्युपलेभे ॥ अ
स्याश्चकर्मवासनायाःपुनर्जन्महेतुत्वान्मलिनत्वं ॥ तथाचाथर्वणि
का अधीयंते ॥ प्लवाह्येते अदृढायज्ञरूपा अष्टादशोक्तमवरंयेषु
कर्म ॥ एतच्छ्रेयोयेभिनंदंतिमूढाजरामृत्युंतेपुनरेवापियंति ॥ अ
विद्यायामंतरेवर्त्तमानाःस्वयंधीराःपंडितंमन्यमानाः ॥ जघन्यमा
नाःपरियंतिमूढा अंधेनैवनीयमानायथांधाः ॥ अविद्यायांबहुधा
वर्त्तमानावयंकृतार्थाइत्यभिमान्यंतिबालाः ॥ यत्कर्मिणोनप्रवेद
यंतिरागात्तेनातुराःक्षीणलोकाश्च्यवंते ॥ इष्टापूर्त्तंमन्यमानावरि
ष्ठंनान्यच्छ्रेयोवेदयंतेप्रमूढाः ॥ नाकस्यपृष्ठेतेसुकृतेनुभूत्वेमंलोकं
हीनतरंवाविशंतीति ॥ भगवताप्युक्तं ॥ यामिमांपुष्पितांवाचंप्रवद
त्यविपश्चितः ॥ वेदवादरताःपार्थनान्यदस्तीतिवादिनः ॥ कामात्मा
नःस्वर्गपराजन्मकर्मफलप्रदां ॥ क्रियाविशेषबहुलांभोगैश्वर्यग
तिंप्रति ॥ भोगैश्वर्यप्रसक्तानांतयापहृतचेतसां ॥ व्यवसायात्मि
काबुद्धिःसमाधौनविधीयते ॥ त्रैगुण्यविषयावेदानिस्त्रैगुण्योभ
वार्जुन ॥ निर्द्वंद्वोनित्यसत्त्वस्थोनिर्योगक्षेमआत्मवान् ॥ यावान
र्थउदपानेसर्वतःसंप्लुतोदके ॥ तावान्सर्वेषुवेदेषुब्राह्मणस्य
विजानतइति ॥ दर्पहेतुत्वाच्छास्त्रीयवासनायांमलिनत्वम् ॥ श्वे
तकेतुर ल्पेनैवकालेनसर्वान्वेदानधीत्यदर्पेणपितुरपिपुरतो
ऽविनयंचकारेतिछंदोगाःषष्ठाध्यायेपठंति ॥ तथाबालाकिःक
श्चिदुपासनांनावगत्यदृप्तउशीनरादिषुबहुषुदेशेषुदिग्विजयेन
बहून्विप्रानवज्ञायकाश्यमजातशत्रुंब्रह्मविद्धिरोमणिंअनुशा
सितुंधार्ष्ट्यंचकारेति ॥ कौषीतकिनोवाजसनेयिनश्चाधीयंते
॥ देहवासनाप्यात्मत्वगुणाधानदोषापनयनभ्रांतिभिस्त्रिविधा
॥ तत्रात्मत्वंभाष्यकारउदाजहार ॥ देहमात्रंचैतन्यविशिष्टमात्मे
तिप्राकृतालोकायतिकाश्चप्रतिपन्नाइति ॥ सवाएषपुरुषोन्नर
समयइत्यारभ्यतस्मादन्नंतदुच्यतइत्यंतेनग्रंथेनतामेवप्राकृ

त्प्रतिपत्तिंतैत्तिरीयाःस्पष्टीकुर्वंते।।विरोचनःप्रजापतिनानुशि-
ष्टोपिस्वचित्तदोषेणदेहात्मबुद्धिंदृढीकृत्यासुरेभ्यस्तथैवानुशशा
सेतिछंदोगाअष्टमोध्यायेसमामनंति।।गुणाधानंद्विविधंलौ
किकंशास्त्रीयंच।।समीचीनशब्दादिसंपादनंलौकिकम्।।कोम
लध्वनिगानायाध्येतुंवातैलपानमरीचभक्षणादिषुलोकाःप्रय
तंते।।मृदुस्पर्शायलोकाःपुष्टिकराण्यौषधाहारानुपयुंजते।।लाव
ण्यायाभ्यंगोद्वर्तनदुकूलालंकारानुपसेवंते।।सौगंध्यायस्रगा
लेपनेधारयंति।।शास्त्रीयंगुणमाधातुंगंगास्नानशालिग्रामतीर्था
दिकंसंपादयंति।।दोषापनयनंचिकित्सकोक्तैरौषधैर्मुखादिप्र
क्षालनेनचलौकिकंशौचाचमनाभ्यांवैदिकमित्युभयविधम्।।
अस्याश्चदेहवासनायामालिन्यंवक्ष्यते।।देहस्यात्मत्वंतावद
प्रामाणिकत्वादशेषदुःखहेतुत्वाच्चमलिनत्वम्।।अस्मिंश्चार्थेपू
र्वाचार्यैःसर्वैरपिपराक्रांतं।।गुणाधानंचप्रायेणनपश्यामः।।प्रसि
द्धाएवगायकाअध्यापकाश्चप्रयतमानाअपिबहवोध्वनिसौष्ठ
वंनलभंते।।मृदुस्पर्शांगपुष्टिश्चननियता।।लावण्यसौगंध्येअ
पिदुकूलस्रगादिनिष्ठेनतुदेहनिष्ठे।।अतएवविष्णुपुराणेभिहि
तं।।मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहतौ।।देहेचेत्प्री-
तिमान्मूढोभवितानरकेपिसः।।स्वदेहाशुचिगंधेननविरज्येतयः
पुमान्।।विरागकारणंतस्यकिमन्यदुपदिश्यतइति।।शास्त्रीयंच
गुणाधानंप्रबलेनशास्त्रांतरेणापोद्यते।।नहिंस्यात्सर्वाभूतानी-
त्यस्याग्निषोमीयंपशुमालभेतेत्यनेनापवादस्तद्वत्प्रबलंशास्त्रमे
तत्।।यस्यात्मबुद्धिःकुणपेत्रिधातुकेस्वधीःकलत्रादिषुभौम
इज्यधीः।।यत्तीर्थबुद्धिःसलिलेनकर्हिचिज्जनेष्वभिज्ञेषुस
एवगोखरः।।असंतमलिनोदेहोदेहीचात्यंतनिर्मलः।।उभयोरं
तरंज्ञात्वाकस्यशौचंविधीयतइत्यादि।।यद्यप्यनेनशास्त्रेणदोषा
पनयनंप्रतिननिषिध्यतेनतुगुणाधानंतथापिसतिविरोधिनि
प्रबलदोषेगुणाधातुमशक्यइत्यर्थाद्गुणाधानस्यप्रतिषेधः।।
असंतमालिन्यंचात्रमैत्रायणीयशाखायांश्रूयते"भगवन्नस्थि

चर्मस्नायुमज्जामांसशुक्रशोणितश्लेष्माऽश्रुदूषिकादूषिते वि
ण्मूत्रवातपित्तसंघाते दुर्गंधे निःसारेऽस्मिन्शरीरे किं कामोपभो
गैरिति॥ शरीरमिदं मैथुनादेवोद्भूतं संविद्ध्यपेतं निरयद्वारमूत्रद्वारे
ण निष्क्रांतमस्थिभिश्चितं मांसेनानुलिप्तं चर्मणावबद्धं विण्मूत्रक
फपित्तमज्जामेदोवसाभिः अन्यैश्चामयैर्बहुभिः परिपूर्णं कोशइव
वसुनेति च चिकित्सया च रोगशांतिर्न नियता शांतोपि रोगः कदाचि
त्पुनरुदेति नवच्छिद्रैर्निरंतरं स्रवत्सु मलेषु रोमकूपैरसंख्यातैः स्वि
न्ने गात्रे को नामाखेदेन प्रक्षालयितुं शक्नुयात्॥ तदुक्तं पूर्वाचार्यैः
॥ नवच्छिद्रकृता देहाः स्रवंति घटिकाइव॥ बाह्यशौचैर्न शुध्यंति नां
तःशौचं तु विद्यते॥ अतो देहवासना मलिना॥ तदेतन्मालिन्यमभिप्रे
त्य वसिष्ठ आह॥ आपादमस्तकमहं मातापितृविनिर्मितः॥ इत्ये
को निश्चयो राम बंधायासद्विलोकनात्॥ सा कालसूत्रपदवी सा
महावीचिवागुरा॥ सासिपत्रवनश्रेणी या देहोहमिति स्थितिः॥
सा त्याज्या सर्वयत्नेन सर्वनाशेऽप्युपस्थिते॥ स्प्रष्टव्या सा न भव्येन
सश्वमांसेव पुल्कसीति॥ तदेतल्लोकशास्त्रदेहवासनात्रयम
विवेकिनामुपादेयत्वेन प्रतिभासमानमपि विविदिषावेदनोत्प
त्तिविरोधित्वाद्दुर्बोधज्ञानप्रतिष्ठाविरोधित्वाच्च विवेकिभिर्हेयं
॥ अत एव स्मर्यते॥ लोकवासनया जंतोः शास्त्रवासनयापि च॥
देहवासनया ज्ञानं यथावन्नैव जायते॥ या तु दंभाद्यासुरसंपद्रू
पा मानसवासना तस्या नरकहेतुत्वान्मलिनमतिप्रसिद्धम्॥ अतः
केनाप्युपायेन वासनाचतुष्टयस्य क्षयः संपादनीयः॥ यथा वास
नाक्षयः संपादनीयः तथा मनसोपि॥ न च तार्किकवन्नित्यद्र
व्यमणुपरिमाणं मनो वैदिका अभ्युपगच्छंति॥ येन मनोनाशो दुःसंपा
दनीयः स्यात्॥ किं तर्हि सावयवमनित्यं सर्वदा जतुसुवर्णादिवद्ब
हुविधपरिणामार्हं द्रव्यं मनः॥ तस्य च लक्षणं प्रमाणं च वाजसने
यिनः समामनंति॥ कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा ध
तिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवेति लक्षणं॥ कामादिवृ
त्तयः क्रमेणोत्पद्यमानानामाशुघटप्रत्यक्षपटादिवत्साक्षिप्रत्यक्षे

णातिस्पष्टंभासते तद्धेतुत्पादानमनइत्यर्थः॥ अन्यत्रमना अभूवन्ना दर्शमन्यत्रमना अभूवन्नाश्रौषमिति॥ मनसाह्येवपश्यतिमनसाशृ णोतीत्यादिप्रमाणं॥ चक्षुःसन्निकृष्टःस्फीतालोकमध्यवर्ती घटःश्रो त्रसन्निकृष्टःउच्चैःपठितोवेदश्च यस्यावधानेऽसतीनप्रतीयतेअव धानेतुप्रतीयते॥ तादृशंसर्वविषयोपलब्धिसाधारणकारणमन्व यव्यतिरेकाभ्यांप्रतीयतइत्यर्थः॥ तस्मादपिपृष्ठतउपस्पृष्टोमन साविजानातीत्येतदुदाहरणं॥ यस्माल्लक्षणप्रमाभ्यांसिद्धंमनस्त स्मात्तदेवंउदाहरणीयं॥ पृष्ठभागेप्यन्येनोपस्पृष्टोदेवदत्तोविशेषेण जानातिहस्तस्पर्शोयमंगुलिस्पर्शोयमिति॥ नहितत्रचक्षुःप्रसरतित्व गिंद्रियंतुमार्दवकाठिण्यमात्रोपक्षीणं॥ तस्मान्मनएवविशेषज्ञान कारणंपरिशिष्यते॥ तच्चमननान्मनइतिचिंतनाच्चित्तमितिचाभि धीयते॥ तच्चित्तंसत्त्वरजस्तमोगुणात्मकंप्रकाशप्रवृत्तिमोहाख्यां सत्त्वादिकार्याणांतत्रदर्शनात् प्रकाशादीनांचगुणकार्यत्वंगुणा तीतलक्षणेऽवगम्यते॥ प्रकाशंचप्रवृत्तिंचमोहमेवचपांडवेत्यभि धानात्॥ सांख्यशास्त्रेपि॥ प्रकाशप्रवृत्तिमोहानियमार्थाइत्युक्तं ॥ प्रकाशोनामनात्रसितभास्वररूपंकिंतुज्ञानं॥ सत्त्वात्संजायतेज्ञा नमित्युक्तत्वात्॥ ज्ञानवत्सुखमपिसत्त्वकार्यंतदप्युक्तं॥ सत्त्वंसु खेसंजयतिरजःकर्मणिभारत॥ ज्ञानमावृत्यतुतमःप्रमादेसं जयत्युतेतिसमुद्रतरंगवन्निरंतरंपरिणममानेषुगुणेषुकदाचित्क श्चिदुद्भवति॥ इतरएवभिभूयेते॥ तदुक्तंरजस्तमश्चाभिभूयःसत्त्वं भवतिभारत॥ रजःसत्त्वंतमश्चैवतमःसत्त्वंरजस्तथेति॥ वाध्य वाधकतायांतिकल्लोलाइवसागरइतिच॥ तत्रतमसउद्भवेसति आसुरसंपदुदेति॥ रजसउद्भवेसतिलोकादिवासनास्तिस्रोभवं ति॥ सत्त्वस्योद्भवेदैवीसंपदुपजायते॥ एतदेवाभिप्रेत्योक्तम्॥ सर्वद्वारेषुदेहेस्मिन्प्रकाशउपजायते॥ ज्ञानंयदातदाविद्याद्वि वृद्धंसत्त्वमित्युतेति॥ यद्यपिअंतःकरणंत्रिगुणात्मकंभासतेत थापिसत्त्वमेवास्यमनसःमुख्यमुपादानकारणं॥ उपादानसह कारिभूताअवयवाउपष्टंभकाःरजस्तमसीतुतदुपष्टंभकेअतएवज्ञा

निनोयोगाभ्यासेन रजस्तमसोरपनीतयोः सत्त्वमेव स्वरूपं परिशि-
ष्यते। एतदेवाभिप्रेत्योक्तं। तस्य चित्तमचित्तं स्यादचित्तं सत्त्वमुच्य-
त इति। तच्च सत्त्वं चांचल्यहेतुरजोगुणशून्यत्वादेकाग्रं। भ्रांति-
कल्पितानात्मस्वरूपस्थूलपदार्थाकारहेतुतमोगुणशून्यत्वात्
सूक्ष्मं तत आत्मदर्शनयोग्यं। अत एव श्रुतिः। दृश्यते त्वग्र्यया बु-
द्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरिति। न खलु वायुना दोधूयमानेन प्रदी-
पेन मणिमुक्तादिलक्षणानि निर्धारयितुं शक्यंते। नापि स्थूलेन ख-
नित्रेण सूच्येव सूक्ष्मपटस्यूतिः संभवति। तदीदृशं सत्त्वमेव यो-
गिभ्रुतमोगुणसहितेन रजोगुणेनोपष्टब्धं बहुविधद्वैतसंकल्पेन
चेतयमानं चित्तं भवति। तच्चित्तं तमोगुणाधिक्ये सत्यासुरीं संपद-
मुपचिन्वल्लीनं भवति। तथाह वसिष्ठः। अनात्मन्यात्मभावेन दे-
हभावनया तथा। पुत्रदारैः कुटुंबैश्च चेतो गच्छति पीनतां॥१॥ अहं-
कारविकारेण ममतामललीलया। इदं ममेति भावेन चेतो गच्छति पी-
नतां॥२॥ आधिव्याधिविलासेन समाश्वासेन संस्तितो। हेयाहेयवि-
भागेन चेतो गच्छति पीनतां॥३॥ स्नेहेन धनलोभेन लाभेन मणियोषि-
तां॥ आपातरमणीयेन चेतो०॥४॥ दुराशाक्षीरपानेन भोगानिलबले-
न च॥ आस्थादानेन चारेण चित्ताहिर्याति पीनतां॥५॥ आस्थाना-
मप्रपंचे सत्यत्वबुद्धिस्तस्या आदानमंगीकारः स एव चारः गमना-
गमनक्रिया तयेति। तदेवं विनाशयनीययोर्वासना मनसोः स्वरू-
पं निरूपितं। अथ वासनाक्षयमनोनाशौ क्रमेण निरूप्येते। तत्र
वासनाक्षयप्रकारमाह। वसिष्ठः। बंधो हि वासनाबंधो मोक्षः
स्याद्वासनाक्षयः॥ वासनास्त्वं परित्यज्य मोक्षार्थित्वमपि त्यज॥
मानसीर्वासनाः पूर्वं त्यक्त्वा विषयवासनाः॥ मैत्र्यादिभावनानाम्नीर्गृहाण मलवासनाः॥ ता अप्यंतः परित्यज्य ताभिर्व्यवहरन्न-
पि॥ अंतः शांतः समस्नेहो भव चिन्मात्रवासनाः॥ तामप्यंतः परि-
त्यज्य मनोबुद्धिसमन्विताम्॥ शेषे स्थिरसमाधानो येन त्यजसि
तं त्यजेति॥ अत्र मानसवासनाशब्देन पूर्वोक्तास्तिस्रो लोकशा-
स्त्रदेहवासना विवक्षिताः॥ विषयवासनाशब्देन दंभदर्पाद्याः

सुखंयद्विवसिता॥मृदुलीनत्वेतद्विवक्षाभेदकारणे॥यद्वाशब्द-
स्पर्शरूपरसगंधविषयास्तेषांकाम्यमानत्वदशाजन्यसंस्कारोमा
नसवासना॥भुज्यमानदशाजन्यःसंस्कारोविषयवासना॥अ-
स्मिन्पक्षेपूर्वोक्तानांचतसृणामनयोरंतर्भावः॥अंतर्बाह्यव्यति
रेकेणवासनांतरासंभवात्॥ननुवासनापरित्यागःकथंघट
ते॥नहितासांमूर्त्तिरस्तिअस्तिचेत्॥येनसंमार्जनीसमूहितधू
लित्रणवद्गृहेनोद्धृत्यवहिस्त्यक्ष्यामः॥मैवं॥उपवासजागरण
वत्तदुपपत्तेः॥स्वभावप्राप्तयोर्भुजिक्रियानिद्रयोरमूर्त्तत्वेपितत्प
रित्यागरूपेउपवासजागरणेसर्वैरप्यनुष्ठीयेतेतद्वदत्राप्यस्तु॥
अद्यस्थित्वानिराहारइत्यादिमंत्रेणसंकल्पंकृत्वासावधानत्वे
नावस्थानंतत्रत्यागइतिचेदत्रापिनतद्वंडनिवारितंप्रैषमात्रेणसं
कल्प्याप्रमत्तत्वेनावस्थातुंशक्यत्वात्॥वैदिकमंत्रानधिकारि
णांतुभाषयासंकल्पोस्तु॥यदितत्रशाकसूपोदनादिसन्निधि
त्यागस्तर्ह्यत्रापिस्रक्चंदनवनितासंनिधिपरित्यागोस्तु॥अथ
तत्रबुभुक्षानिद्रालस्यादिविस्मारकैःपुराणश्रवणदेवपूजानृ
त्यगीतवादित्रादिभिश्चित्तमुपलाल्यतेतर्ह्यत्रापिमैत्र्यादिभि
स्तदुपलालयेत्॥मैत्र्यादिभिश्चपतंजलिनासूत्रिताः॥मैत्री
करुणामुदितोपेक्षाणांसुखदुःखपुण्यापुण्यविषयाणांभाव
नातश्चित्तप्रसादनमिति॥चित्तंहिरागद्वेषपुण्यपापैःकलुषी-
क्रियते॥रागद्वेषौपतंजलिःसूत्रयामास॥सुखानुशायीरागः॥दुः
खानुशायीद्वेषइति॥स्नेहात्त्वेनानुभूयमानंसुखमनुशेतेकश्चि
द्वीहत्तिविशेषःसुखजातंसर्वंमेभूयादिति॥तच्चदृष्टादृष्टसाम-
ग्र्यभावान्नसंपादयितुंशक्यं॥अतःसरागश्चित्तंकलुषीकरोति॥
यदासुखिप्राणिषुअयंमैत्रीभावयेत्॥सर्वेप्येतेसुखिनःमदीयाइ
तितदातत्सुखंस्वकीयमेवसंपन्नमितिभावयतस्तत्ररागोनिवर्त
ते॥यथास्वस्यराज्याभावेपिपुत्रादिराज्यमेवस्वकीयंतद्वत्॥नि
वृत्तेचरागेवर्षास्वतीतासुशरत्सरिदिवचित्तंप्रसीदति॥तथादुःख
मनुशेतेकश्चित्प्रत्ययःइदृशंदुःखंसर्वदामेमाभूदितितच्चशत्रु

व्याघ्रादिषुसत्सुननिवारयितुंशक्यं॥नचसर्वेदुःखहेतवोहंतुंश
क्यंते॥ततःसद्वेषःसहृदयंदहति॥यदास्वस्येवपरेषांसर्वेषां
प्रतिकूलंदुःखंनभूयादिति॥अनेनप्रकारेणकरुणांदुःखिप्रा
णिषुभावयेत्तदावैर्यादिषुद्वेषनिवृत्तौचित्तंप्रसीदति॥अतःस्म
र्यते॥प्राणायथात्मनोभीष्टाभूतानामपितेतथा॥आत्मौपम्येन
भूतानांदयांकुर्वंतुमानवाइति॥तत्प्रकारंमहांतोदर्शयंति॥स
र्वेत्रसुखिनःसंतुसर्वेसंतुनिरामयाः॥सर्वेभद्राणिपश्यंतुमाक
श्चिद्दुःखमाप्नुयात्इति॥तथाप्राणिनःस्वभावएवपुण्यंनानुतिष्ठं
तिपापंत्वनुतिष्ठंति॥तदाहुः॥पुण्यस्यफलमिच्छंतिपुण्यंनेच्छं
तिमानवाः॥नपापफलमिच्छंतिपापंकुर्वंतियत्नतइति॥तेचपु
ण्यपापेअक्रियमाणक्रियमाणेपश्चात्तापंजनयतःसचतापःश्रु
त्याअनूद्यते॥किमहंसाधुनाकरवं॥किमहंपापमकरवमिति॥
यदासौपुण्यपुरुषेषुमुदितांभावयेत्तदातद्वासनयास्वयमप्रमत्तः
पुण्येषुप्रवर्तेत॥तथापापिषूपेक्षांभावयन्स्वयमपिपापान्निवर्ते
त॥अतःपश्चात्तापस्याभावेनचित्तंप्रसीदति॥सुखिषुमैत्रीभावय
तोनकेवलंरागनिवृत्तिः॥किंत्वसूयेर्ष्यादयोपिनिवर्तंते॥परगु
णानामसहनमीर्ष्यागुणेषुदोषाविष्करणमसूया॥यदामैत्रीव
शात्परकीयंसुखंस्वकीयमेवसंपद्यतेतदापरगुणेकथमसू
यादिकंभवेत्॥एवंदोषांतरनिवृत्तिरपियथायोग्यमुन्नेया॥दुः
खिषुकरुणांभावयतःशत्रुवधादिकरोद्वेषोयथानिवर्तते॥तथा
दुःखित्वप्रतियोगिकस्वसुखित्वप्रयुक्तोपिदर्पोपिनिवर्तते॥स
चदर्पःआसुरसंपद्यहंकारप्रस्तावेपूर्वमुदाहृतः॥ईश्वरोहमहंभो
गीसिद्धोहंबलवान्सुखी॥आढ्योभिजनवानस्मिकोन्योस्तिसदृ
शोमयेति॥ननुपुण्यात्मसुमुदितांभावयतःपुण्यप्रवृत्तिःफलत्वे
नोक्तासाचयोगिनोनयुक्तामलिनायांशास्त्रवासनायांपुण्यमंतर्भा
व्यपूर्वमुदाहृतत्वात्॥मैवं॥पुनर्जन्मकरस्यकाम्येष्टापूर्तादेस्तत्र
मलिनत्वेनोदाहरणात्॥इहतुयोगाभ्यासजन्यमशुक्लकृष्णत्वे
नजन्मतापारकंपुण्यकर्मविवक्षितं॥अशुक्लकृष्णत्वंपतंज

लिः स्तूयामास॥ कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषामि
ति॥ काम्यकर्म विहितत्वाच्छुक्लं निषिद्धं कृष्णं मिश्रं शुक्लकृष्णं॥
तदेतत्त्रयमितरेषामयोगिनां संपद्यते॥ तच्च त्रिविधं जन्म प्रयच्छ
ति॥ तदाहुर्विश्वरूपाचार्याः॥ शुभैराप्नोति देवत्वं निषिद्धैर्नारकीं
गतिं॥ उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभते वश इति॥ ननु योग
स्यानिषिद्धत्वादकृष्णत्वेपि विहितत्वाच्छुक्लत्वमिति चेत् मैवं॥ अका
म्यत्वाभिप्रायेणाशुक्लत्वाभिधानत्वात्॥ अतोऽशुक्लाकृष्णे पुण्ये प्रवृत्ति
र्योगिनोऽपेक्षिता॥ नन्वनेन न्यायेन योगिनोपि यथोचितं पुण्यात्मसु मु
दितां भावयित्वा पुण्येष्वेव प्रवृत्तेरन्निति चेत्॥ प्रवर्त्ततां नाम ये मैत्र्यादि
भिश्चित्तं प्रसादयंति तेषामेव योगित्वात्॥ मैत्र्यादिचतुष्टयं उपलक्षणं
॥ तेनाभयं सत्त्वसंशुद्धिरित्यादिदैवीसंपदमानित्वमदंभित्वमित्या
दिज्ञानसाधनानि जीवन्मुक्तस्थितप्रज्ञादिवचनोक्तधर्माश्चोपल
क्ष्यंते॥ सर्वेषामेतेषां शुभाशुभवासनारूपत्वेन मलिनवासनानिवर्त्त
कत्वात्॥ ननु संत्यनंताः शुभवासनाः न चैकेन ताः सर्वा अभ्यसितुं श
क्यंते॥ निरर्थकश्च तदभ्यासप्रयास इति चेन्न॥ तन्निवर्त्यानामनंता
नां मलिनवासनानामेकस्य मनस्यसंभवात्॥ न ह्यायुर्वेदोक्तानि सर्वा
ण्यौषधानि एकेन सेवितुं शक्यंते॥ नापि तन्निवर्त्याः सर्वे रोगा एकस्य
देहे संभवंति॥ एवं तर्हि स्वचित्तं प्रथमतः परीक्ष्य तत्र यद्याव सो मलिन
वासनास्तदा तावती विरोधिनीः शुभवासना अभ्यसेत्॥ यथा पुत्रमि
त्रकलत्रादिभिः पीड्यमानस्ततो विरक्तस्तन्निवर्त्तकं पारिव्राज्यं गृ
ह्णाति॥ तथा विद्यामदधनमदकुलाचारमदादिमलिनवासनाभिः
पीड्यमानस्तद्विरोधिनं विवेकमभ्यसेत्॥ स च विवेको जनकेन द
र्शितः॥ अद्य ये महतां मूर्ध्नि ते दिनैर्निपतंत्यधः॥ हंत चित्तमह
त्तायाः कैषा विश्वस्तता तव॥ क्व धनानि महीपानां ब्रह्मणः क्व जगं
ति वा॥ प्राक्तनानि प्रयातानि केयं विश्वस्तता तव॥ कोटयो ब्रह्मणो
याताः गताः सर्गपरंपराः॥ प्रयाताः पांसुवद्भूपाः का धृतिर्मम जीवि
ते॥ येषां निमेषणोन्मेषौ जगतां प्रलयोदयौ॥ तादृशाः पुरुषा नष्टा
मादृशां गणनैव केति॥ नन्वयमपि विवेकस्तत्त्वज्ञानोदयात्प्राचीनः

नित्यानित्यवस्तुविवेकादिसाधनव्यतिरेकेण ब्रह्मज्ञानासंभवा-
त्॥ इह तूत्पन्नब्रह्मसाक्षात्कारस्य जीवन्मुक्तये वासनाक्षयादि-
साधनं वक्तुमुपक्रांतं॥ अतः किमिदमकांडे तांडवमिति चेत् नायं
दोषः॥ साधनचतुष्टयसंपन्नस्य पश्चाद्ब्रह्मज्ञानमित्येषः सर्वपुरुष
साधारणः क्षुण्णः प्रौढो राजमार्गः॥ जनकस्य तु पुण्यपुंजपरिपाके
नाकाशफलपातवदकस्मात्सिद्धगीताश्रवणमात्रेण तत्त्वज्ञान
मुत्पन्नं॥ ततश्चित्तविश्रांतये विवेकोयं क्रियत इति कांडैवेदमुचि
तं तांडवं॥ नन्वेवमप्यस्य विवेकस्य ज्ञानसमनंतरभावित्वेन मलिन
वासनानुवृत्त्यभावाच्छुद्धवासनाया अभ्यासो नापेक्षित इति चेन्न॥
जनकस्य तदनुवृत्त्यभावेपि याज्ञवल्क्यभगीरथादेस्तदनुवृत्तिद
र्शनात्॥ अस्ति हि याज्ञवल्क्यस्य तत्समतिवादनामुषस्तकहोलादी
नां भूयान्विद्यामदः तैः सर्वैरपि विजिगीषुकथायां प्रवृत्तत्वात्॥ ननु
तेषां विद्यांतरमेवास्ति न तु ब्रह्मविद्येति चेन्न॥ कथागतयोः प्र
श्नोत्तरयोः ब्रह्मविषयत्वात्॥ ननु ब्रह्मविषयत्वेपि तेषाममा तज्ज्ञा
नमेव न तु सम्यग्वेदनमिति चेन्न॥ तथा सत्यस्माकमिति तदीयवा
क्यैरुत्पन्नाया ब्रह्मविद्याया असम्यक्त्वप्रसंगात्॥ ननु सम्यक्त्वमपि
परोक्षज्ञानमिति चेन्न॥ यत्साक्षादपरोक्षाद्ब्रह्मेति मुख्यापरोक्षवि
षयतयैव विशेषतः प्रश्नोपलंभात्॥ नन्वात्मज्ञानिनो विद्यामद
आचार्यैर्नाभ्युपगम्यते॥ तथा चोपदेशसाहस्र्यामुक्तं॥ ब्रह्मवित्त्वं
तथा मुक्त्वा स आत्मज्ञो न चेतर इति॥ नैष्कर्म्यसिद्धावपि॥ न चा-
ध्यात्माभिमानोपि विदुषोस्त्यासुरत्वतः॥ विदुषोप्यासुरश्चेत्स्यान्नि
ष्फलं ब्रह्मदर्शनमिति॥ नायं दोषः॥ जीवन्मुक्तिपर्यंतस्य तत्त्वज्ञा
नस्य तत्र विवक्षितत्वात्॥ न खलु वयमपि जीवन्मुक्तानां विद्याम
दमभ्युपगच्छामः॥ ननु विजिगीषोरात्मबोध एव नास्ति॥ रागो लिं
गमबोधस्य चित्तव्यायामभूमिषु॥ कुतः शाड्वलता तस्य यस्या-
ग्निः कोटरे तरोरित्याचार्यैरनभ्युपगमादिति चेन्न॥ रागादयः संतु
कामं न तद्भावोपराध्यतीत्यत्र तैरेव रागाद्यभ्युपगमात् न चात्र प-
रस्परव्याहतिः॥ स्थितप्रज्ञे ज्ञानिमात्रे च वचनद्वयस्य व्यवस्था

पनीयत्वात्॥ ननु ज्ञानिनोरागाद्यभ्युपगमे धर्माधर्मद्वारेण जन्मांतर प्रसंगइतिचेन्मैवं॥ अदग्धबीजवदविद्यापूर्वकाणामेव मुख्यरागा दित्वेन पुनर्जन्महेतुत्वात्॥ ज्ञानिनस्तु दग्धबीजवदाभासएव रागादयः॥ एतदेवाभिप्रेत्योक्तं॥ उत्पद्यमानारागाद्याविवेकज्ञा नवह्निना॥ तदातदेवदह्यंते कुतस्तेषांप्ररोहणमिति॥ तर्हि स्थि तप्रज्ञस्यापितेसंत्विति चेत्तन्न॥ तत्कालेमुख्यवदेवाभासानांबाध कत्वात्॥ रज्जुसर्पोपिमुख्यसर्पवदेवतदानींभीषयन्नुपलभ्यतेत द्वत्॥ ननु आभासत्वानुसंधानानुवृत्तौनकोपिबाधइतिचेत्॥ चिरं जीवतुभवानियमेवह्यस्मदभिमताजीवन्मुक्तिः॥ याज्ञवल्क्यस्तु विजिगीषुदशायांनतादृशः॥ अतश्चित्तविश्रांतयेविद्वत्संन्यास स्यतेनकरिष्यमाणत्वात्॥ नकेवलमस्यजिगीषा किंतु धनतृष्णा पिमहतीजातायतोबहूनांब्रह्मविदांपुरतःस्थापितंसालंकारंगो सहस्रमपहृत्यस्वयमेवेदमाह॥ नमोवयंब्रह्मिष्ठायकुर्मोगोका माएववयंस्मइति॥ इतरान्ब्रह्मविदोवत्तातुइयंकाचिद्वचोभंगी तिचेत्॥ अयमपितर्हिपरोदोषः॥ इतरेचब्रह्मविदःस्वकीयंधनं मनेनापहृतमितिमत्वाचुक्रुधुः॥ अयंचक्रोधपरवशःशाकल्यंशा पेनमारयामास॥ नचास्यब्रह्मघ्नस्यमोक्षाभावःशंकनीयः॥ यतः कौषीतकिनःसमामनंति॥ नास्यकेनचकर्मणालोकोहीयतेनमातृ वधेननपितृवधेननस्तेयेननभ्रूणहत्ययेति॥ पुण्योपिस्वकृता यामार्यपंचाशिकामिदमाह॥ हयमेधशतसहस्राण्यथकुरुतेब्र ह्मघातलक्षाणि॥ परमार्थविन्नपुण्यैर्नचपापैःस्पृश्यतेविमलइ ति॥ किंबहुनाब्रह्मविदांयाज्ञवल्क्यादीनामस्त्येवमलिनवासना नुवृत्तिः॥ भगीरथश्चतत्त्वंविदित्वापिराज्यंपालयन्मलिनवासना भिश्चित्तविश्रांत्यभावेसतिसर्वंपरित्यज्यपश्चाद्विश्रांतवानितिव सिष्ठेनोपाख्यायते॥ अतःस्वकीयंवर्तमानंमलिनवासनाविशेषं परकीयदोषवत्सम्यगुत्प्रेक्ष्यतत्प्रतीकारमभ्यसेत्॥ अनेनैवाभि प्रायेणस्मर्यते॥ यथासुनिपुणःसम्यक्परदोषेक्षणेरतः॥ तथाचे न्निपुणःस्वेषुकोनमुच्येतबंधनादिति॥ ननुआदौतावद्विद्यामद

स्यकः प्रतीकार इति चेत्॥ किं स्वनिष्ठस्य मदस्य परविषयस्य किं वा
स्वविषयस्य परनिष्ठस्य॥ आद्ये भंगो वश्यं क्वचिद्भविष्यतीति निरंतरं
भावयेत्॥ तद्यथा श्वेतकेतुर्विद्यामत्तः प्रवाहणस्य राज्ञः सभां ग
त्वा तेन पंचाग्निविद्यां पृष्टः तां स्वयमजानानो निरुत्तरो राज्ञा बहु
धा भर्त्सितः पितुः समीपमागत्य स्वनिर्वेदमुदाजहार॥ पिता तु त
न्निर्मदः तमेव राजानमुपसंपद्य तां विद्यां लेभे॥ दृप्तबालाकिश्चा
जातशत्रुणा राज्ञा भर्त्सितो दर्पं संत्यज्य राजानमुपससाद॥ उषक
होलादयश्च मदेन कथां कृत्वा पराजिताः॥ यदा स्वविषयः परनि
ष्ठो मदः प्रवर्तते तदा मत्तः स परो मां निंदतु प्रवमन्यतां वा सर्वथा
पि न हानिरिति भावयेत्॥ अत एवाहुः॥ आत्मानं यदि निंदंति स्वा
त्मानं स्वयमेव ते॥ शरीरं यदि निंदंति सहायास्ते जना मम॥ निंदा
वमानावत्यंतं भूषणं यस्य योगिनः॥ धीविक्षेपः कथं तस्य वाचाटैः क्रि
यतामिहेति॥ नैष्कर्म्यसिद्धौ॥ सपरिकरे वर्चस्के दोषतश्चावधारि
ते॥ यदि दोषं वदेत्तस्मै किं तत्रोपचरितुर्भवेत्॥ तद्वत्स्थूले तथा सू
क्ष्मे देहेऽस्मिन्के विवेकतः॥ यदि दोषं वदेत्ताभ्यां किं तत्र विदुषो भवे
त्॥ शोकहर्षभयक्रोधलोभमोहस्पृहादयः॥ अहंकारस्य दृश्यंते
जन्ममृत्युश्च नात्मनः॥ ३॥ निंदाया भूषणत्वं ज्ञानांकुशे दर्शितम्॥
मन्निंदया यदि जनः परितोषमेति नन्वप्रयत्नजनितोयमनुग्रहो मे
॥ श्रेयोर्थिनो हि पुरुषाः परतुष्टिहेतोर्दुःखार्जितान्यपि धनानि परि
त्यजंति॥ सततसुलभदैन्ये निःसुखे जीवलोके यदि मम परिवादा
त्प्रीतिमाप्नोति कश्चित्॥ परिवदतु यथेष्टं मत्समक्षं तिरो वा जगति
हि बहुदुःखे दुर्लभः प्रीतियोग इति॥ अवमानस्य भूषणत्वं स्मर्य
ते॥ तथा चरेत वै योगी सतां धर्ममदूषयन्॥ जना यथावमन्येरन्
गच्छेयुर्नैव संगतिमिति॥ याज्ञवल्क्योषस्तादीनां यो स्वनिष्ठपर
निष्ठौ विद्यामदौ तयोर्यथा विवेकेन प्रतीकारः तथा धनाभिलाष
क्रोधयोरप्यवगंतव्यः॥ अर्थानामार्जने क्लेशस्तथैव परिपालने
॥ नाशे दुःखं व्यये दुःखं धिगर्थान्क्लेशकारिणः॥ इति धनविषयो
विवेकः॥ क्रोधोपि हि द्विविधः॥ परविषयः परनिष्ठः स्वविषयश्च

स्वनिष्ठ

ति॥तत्रस्वनिष्टंप्रस्येवमुक्तं॥अपकारिणिकोपश्चेत्कोपेकोपःकथंन
ते॥धर्मार्थकाममोक्षाणांप्रसह्यपरिपंथिनि॥फलान्वितोधर्मय
प्रोर्थनाशनःसचेदपार्थःस्वशरीरतापनः॥नचेहनामुत्रहिताय
यःस्तत्तांमनासिकोपःसमुपाश्रयेत्कथमिति॥स्वविषयंप्रत्येवमीरि
तं॥नमेपराधःकिमकारणान्नणांमदभ्यसूयेत्यपिनैवचिंतयेत्॥
नयत्कृताप्राग्भवबंधनिःसृतिस्ततोपराधःपरमोनुचिंत्यताम्॥
नमोस्तुकोपदेवायस्वाश्रयज्वालिनेभृशं॥कोप्यस्यममवैराग्य
दायिनेदोषबोधिनेइति॥धनाभिलाषक्रोधवद्योषित्पुत्राभिला
षावपिविवेकेननिवर्त्तनीयौ॥तत्रयोषिद्विवेकोवसिष्ठेनदर्शितः
॥मांसपांचालिकायास्तुयंत्रलोलेंगपंजरे॥स्नाय्वस्थिग्रंथिशा
लिन्याःस्त्रियःकिमिवशोभनं॥त्वङ्मांसरक्तबाष्पांबुपृथक्कृत्वा
विलोचने॥समालोकयरम्यंचेत्किंमुधापरिमुह्यसि॥मेरुशृंगत
टोल्लासिगंगाजलरयोपमा॥दृष्टायस्मिन्स्तनेमुक्ताहारस्योल्ला
सशालिनः॥श्मशानेषुदिगंतेषुसएवललनास्तनः॥श्वभिरास्वा
द्यतेकालेलघुपिंडमिवांधसः॥केशकज्जलधारिण्योदुःस्पर्शा
लोचनप्रियाः॥दुष्कृताग्निशिखानार्योदहंतितृणवन्नरान्॥ज्व
लतामतिदूरेपिसरसाअपिनीरसाः॥स्त्रियोहिनरकाग्नीनामिंध
नंचारुदारुणं॥कामनाम्नाकिरातेनविकीर्णामुग्धचेतसां॥नार्यो
नरविहंगानामंगबंधनवागुराः॥जन्मपल्वलमत्स्यानांचित्तकर्दम
चारिणां॥पुंसांदुर्वासनारज्जुर्नारीबडिशपिंडिका॥सर्वेषांदोष
रत्नानांसुसमुद्गिकयानया॥दुःखशृंखलयानित्यमलमस्तुमम
स्त्रिया॥इतोमांसमितोरक्तमितोऽस्थीनीतिवासरैः॥ब्रह्मन्कतिप
यैरेवयातिस्त्रीविषचारुतां॥यस्यस्त्रीतस्यभोगेच्छानिःस्त्रीकस्य
क्वभोगभूः॥स्त्रियंत्यक्त्वाजगत्त्यक्तंजगत्त्यक्त्वासुखीभवेत्॥पुत्र
विषयविवेकोब्रह्मानंदेदर्शितः॥अलभ्यमानस्तनयःपितरौक्ले
शयेच्चिरं॥लब्धोपिगर्भपातेनप्रसवेनचबाधते॥जातस्यग्रहरो
गादिःकुमारस्यचमूर्खता॥उपनीतेप्यविद्यत्वमनुद्वाहश्चपंडि
ते॥यूनश्चपरदारादिदारिद्र्यंचकुटुंबिनः॥पित्रोर्दुःखस्यनास्त्य

तो धनिचेन्नियतेतदेति ॥ यथाविद्याधनक्रोधयोर्भिक्षुन्नविष-
याणांमलिनवासनानां विवेकेनप्रतीकारः तथाऽन्यासामपिशास्त्रा-
योगंघशास्त्रैः स्वयुक्त्या चदोषंविविच्यप्रतीकारंकुर्यात् ॥ कृतेचप्र-
तीकारेजीवन्मुक्तिलक्षणंपरमंपदंलभ्यते ॥ तदाह वसिष्ठः ॥ द्वै-
वासनासंपरित्यागेयदियत्नंकरोष्यलं ॥ तात्तेशिथिलतांयांतिस-
र्वाधिव्याधयःक्षणात् ॥ पौरुषेणप्रयत्नेनबलात्संत्यज्यवासनां
॥ स्थितिंबध्नासिचेत्तर्हिपदमासादयस्यलमिति ॥ ननुनपौरुष-
प्रयत्नोनामपूर्वोक्तोविषयदोषविवेकः सचपुनःपुनः क्रियमाणो
पिप्रबलेंद्रियव्यापारेणाभिभूयते ॥ तदुक्तंभगवता ॥ यततोह्यपि
कौंतेयपुरुषस्यविपश्चितः ॥ इंद्रियाणिप्रमाथीनि हरंतिप्रसभं
मनइति ॥ इंद्रियाणांहिचरतांयन्मनोनुविधीयते ॥ तदस्यहरति
प्रज्ञांवायुर्नावमिवांभसि ॥ इतिचेत्तन्न ॥ एवंतर्ह्युत्पन्नविवेकर-
क्षार्थंइंद्रियाणिनिरोद्धव्यानि ॥ तदपितत्रैवउत्तरश्लोकाभ्यांदर्शि-
तं ॥ तानिसर्वाणिसंयम्ययुक्तआसीतमत्परः ॥ वशेहियस्येंद्रिया-
णितस्यप्रज्ञाप्रतिष्ठिता ॥ तस्माद्यस्यमहाबाहोनिगृहीतानिसर्व-
शः ॥ इंद्रियाणींद्रियार्थेभ्यस्तस्यप्रज्ञाप्रतिष्ठितेति ॥ स्मृत्यंतरेपि ॥
नपाणिपादचपलोननेत्रचपलोयतिः ॥ नचवाक्चपलश्चैवमिति
शिष्टस्यलक्षणमिति ॥ एतदेवान्यत्रसंग्रहविवरणाभ्यांस्पष्टी-
कृतं ॥ अजिह्वःषंडकःपंगुरंधोबधिरएवच ॥ मुग्धश्चमुच्यतेभि-
क्षुःषड्भिरेतैर्नसंशयः ॥ इदमिष्टमिदंनेतियोश्नन्नपिनसज्जते ॥
हितंसत्यंमितंवक्तितमजिह्वंप्रचक्षते ॥ अद्यजातांयथानारीं
तथाषोडशवार्षिकीं ॥ शतवर्षांचयोदृष्ट्वानिर्विकारःसषंडकः ॥
भिक्षार्थंगमनंयस्यविण्मूत्रकरणायच ॥ योजनान्नपरंयातिसर्व-
थापंगुरेवसः ॥ तिष्ठतोव्रजतोवापियस्यचक्षुर्नदूरगं ॥ चतुर्युगांभु-
वंमुक्त्वापरिव्राट्सोंधउच्यते ॥ हितंमितंमनोरमंवचःशोकापहं
चयत् ॥ श्रुत्वायोनशृणोतीवबधिरःसप्रकीर्तितः ॥ सान्निध्येवि-
षयाणांचसमर्थोऽविकलेंद्रियः ॥ सुप्तवद्वर्ततेनित्यंभिक्षुर्मुग्धः
सउच्यते ॥ ननिंदांनस्तुतिंकुर्यान्नकिंचिन्मर्मणिस्पृशेत् ॥ नातिवा-

दीभवेत्तद् तत्सर्वत्रैवसमोभवेत्॥ नस्तंभावेत्तित्रयंकांचित्यूर्वदृष्टां चनस्मरेत्॥कथांचवर्जयेत्तासांनपश्येच्चिखितामपीति॥यथाक श्चिद्व्रतीनक्तैकभुक्तोपवासमौनादिव्रतंसंकल्प्यसावधानोभ्रंश मकृत्वासम्यक्पालयति॥तथैवाजिव्हत्वादिव्रतेस्थितःसावधा नोविवेकंपालयेत्॥तदेवंविवेकेंद्रियरोधाभ्यांदीर्घकालेनैरंतर्य सत्कारसेविताभ्यांमैत्र्यादिभावनासुप्रतिष्ठितास्वासुरसंपद्रूपाम लिनवासनाःक्षीयंते॥ततोनिश्वासोच्छ्वास वन्निमेषोन्मेषवच्च पुरुषप्रयत्नमंतरेणप्रवर्त्तमानाभिर्मैत्र्यादिवासनाभिर्लौकेव्यवह रन्नपितदीयसाकल्यवैकल्यानुसंधानंचित्तेपरित्यज्यनिद्रातंद्री मनोराज्यादिरूपाःसमस्तचेष्टाःप्रयत्नेनशांताःकृत्वाचिन्मात्रवा सनामभ्यसेत्॥स्वतस्तावदिदंजगच्चिज्जडोभयात्मकंभासते॥य द्यपिशब्दस्पर्शादिजडवस्तुभासनायैवेंद्रियाणिसृष्टानि॥परां चिखानिव्यतृणत्स्वयंभूरितिश्रुतेः॥तथापिचैतन्यस्योपादान तयावर्जयितुमशक्यत्वाच्चैतन्यपूर्वकमेवजडंभासते॥तमेव भांतमनुभातिसर्वंतस्यभासासर्वमिदंविभातीतिश्रुतेः॥तथास तिपश्चाद्भासमानस्यजडस्यप्रथमतोभासमानमेवचैतन्यंवास्तवं रूपमितिनिश्चित्यजडमुपेक्ष्यचिन्मात्रंचित्तेवासयेत्॥एतच्चबलि सुक्रयोःप्रश्नोत्तराभ्यांविस्फुटमवगम्यते॥किमिहास्तिकियन्मा त्रमिदंकिन्मयमेवच॥कस्त्वंकोहंकएतेवालोकाइतिवदाशुमे॥ चिदिहास्तीतिचिन्मात्रमिदंचिन्मयमेवच॥चित्त्वंचिदहमेतेचलो काश्चिदितिसंग्रहइति॥यथासुवर्णकारःकटकंविक्रीणन्नपि वलयाकारस्यगुणदोषावनुपेक्ष्यगुरुत्ववर्णयोरेवमनःप्रणिधि त्सति॥तथाचिन्मात्रेमनःप्रणिधातव्यं॥यावताकालेनजडंसर्वथै वोपेक्ष्यचिन्मात्रेमनसःप्रवृत्तिर्निश्वासवत्स्वाभाविकीसंपद्यते ॥तावंतंकालंचिन्मात्रवासनायांप्रयतेत॥नन्वादावेवचिन्मात्र वासनाऽस्तुतयैवमलिनवासनानिवृत्तेः॥किमनेनांतर्गडुनामैत्र्या द्यभ्यासेनेतिचेत्॥न॥चिद्वासनायाअप्रतिष्ठितत्वप्रसंगात्॥य थाकुट्टिमदार्व्यव्यतिरेकेणक्रियमाणंस्तंभकुड्यात्मकंगृहं

नमतितिष्ठति॥यथावाविरेचनेनप्रबलदोषमनिःसार्यसेवि-
तमप्यौषधंनारोग्यकरंतद्वत्॥ननुतामप्यथपरित्यजेतिचि-
न्मात्रवासनायाअपिपरित्याज्यत्वमवगम्यते॥तदयुक्तम्॥चिन्मा
त्रंपरित्यज्यान्यस्यकस्यचिदुपादेयस्याभावात्॥नायंदोषः॥द्वि
विधाचिन्मात्रवासनामनोबुद्धिसमन्विता॥तद्रहिताचेति॥करणं
मनःकर्तृत्वोपाधिर्बुद्धिः॥तथाचसत्यप्रमत्तोहमेकाग्रेणमनसा-
चिन्मात्रंभविष्यामीति॥एतादृशेनकर्तृकरणानुसंधानेनसमन्वि
ता प्राथमिकीयाचिन्मात्रवासनाध्यानशब्दाभिधेयातांपरित्यजेत्
॥यात्वभ्यासपाटवेनकर्तृत्वाद्यनुसंधानमवधानरहितासमाधि
शब्दाभिधेयातामुपाददीतध्यानसमाध्योर्लक्षणंपतंजलिः
सूत्रयामास॥तत्रप्रत्ययैकतानताध्यानं॥तदेवार्थमात्रनिर्भासं
स्वरूपशून्यमिवसमाधिरिति॥तादृशेसमाधौदीर्घकालनैरंत
र्यसंस्कारैःसेवितेस्थैर्यलब्ध्वापश्चात्कर्तृकरणानुसंधानपरि
त्यागार्थोयःप्रयत्नःतमपिपरित्यजेत्॥नन्वेवंसतितत्यागयत्नेपि
परित्याज्य इत्यनवस्थास्यात्॥मैवं॥कतकरजोन्यायेनस्वपरनि
वर्तकत्वात्यथाकलुषितेजलेप्रक्षिप्तंकतक रजइतररजसास
हस्वात्मानमपिनिवर्तयति॥तथात्यागार्थःप्रयत्नःकर्तृकरणा
नुसाधनंनिवर्तयन्स्वात्मानमपिनिवर्तयिष्यति॥निवृत्तेतस्मि
न्मलिन वासनानांशुभवासनातत्ववासनानामपिक्षीणत्वान्नि
र्वासनंमनोवतिष्ठते॥एतदेवाभिप्रेत्यवसिष्ठआह॥तस्माद्वासन
याबद्धंमुक्तंनिर्वासनंमनः॥समनिर्वासनीभावमाहराशुविवे
कतः॥सम्यगालोचनात्सत्याद्वासनाप्रविलीयते॥वासनावि
लयेचेतःशममायातिदीपवदितिच॥योजागर्तिसुषुप्तस्थोय
स्याजाग्रन्नविद्यते॥यस्यनिर्वासनोबोधःसजीवन्मुक्तउच्यते
इतिच॥सुषुप्तिवत्प्रशमितभाववृत्तिनास्थितःसदाजाग्रतियेन
चेतसा॥कलान्वितोविधुरिवयःसदाबुधैर्निषेव्यतेमुक्तइतीह
संस्मृतइतिच॥हृद्यात्संपरित्यज्यसर्वमेवमहामतिः॥यस्तिष्ठ
तिगतव्यग्रःसमुक्तःपरमेश्वरः॥समाधिमथकर्माणिमाकरोतुक

रेत्तुवा॥ हृदये नास्तसर्वांशो मुक्त एवोत्तमाशयः॥ नैष्कर्म्येण न त
स्यार्थस्तस्यार्थोस्ति न कर्मभिः॥ न समाधानजप्याभ्यां यस्य निर्वा
सनं मनः॥ विचारितमलं शास्त्रं चिरमुद्ग्राहितं मिथः॥ संत्यक्तवा
सनान्मौनादृते नास्तुत मं पदमिति च॥ न च निर्वासनमनस्कस्य
जीवने हेतुव्यवहारो लुप्येतेति शंकनीयं॥ किंच सुरादिव्यवहा
रस्य लोपः किं वा मानसव्यवहारस्य तत्राद्यमुद्दालकः निराचष्टे॥
वासनाहीनमप्येतच्चक्षुरादींद्रियं स्वतः॥ प्रवर्त्तते बहिः स्वार्थे वा
सना नात्र कारणमिति॥ द्वितीयं वसिष्ठो निराचष्टे॥ अयत्नोपनते
ष्वक्षिदृग्द्रव्येषु यथा पुनः॥ नीरागमेव पतति तद्वत्कार्येषु धीर
धीरिति॥ तादृश्या धिया प्रारब्धभोगं स एवोपपादयति परिज्ञायोप
युक्तो हि भोगो भवति तुष्टये॥ विज्ञाय सेवितश्चौरो मैत्रीमेति न चौरतां
॥ अशंकितोपसंप्राप्ता ग्रामयात्रा यथाऽध्वगैः॥ प्रेक्ष्यते तद्वदेव
ह भोगश्रीरवलोक्यत इति॥ भोगकाले सवासनेभ्यो निर्वासन
स्य विशेषमाह॥ नापद्ग्लानिमायाति हेमपद्मं यथा निशि॥ नेहं
ते प्रकृतादन्यद्रमंते शिष्टवर्त्मनि॥ नित्यमापूर्णतामंतरस्तुद्धामिं
दुसुंदरीं॥ आपद्यपि न मुंचंति शशिनः शीततामिव॥ अब्धि
वद्धृतमर्यादा भवंति विगताशयाः॥ नियतिं न विमुंचंति महांतो
भास्करा इवेति॥ जनकस्यापि समाधिव्युत्थितस्येदृशमेवाचर
णं प्रपंच्यते॥ तूष्णीमथ चिरं स्थित्वा जनको जनजीवितं॥ व्युत्थि
तश्चिंतयामास मनसा प्रशमशालिना॥ किमुपादेयमस्तीह यत्न
संसाधयामि किं॥ स्वतः स्थितस्य शुद्धस्य चितः कामेऽस्ति कल्प
ना॥ नाभिवांछाम्यसंप्राप्तं संप्राप्तं न त्यजाम्यहं॥ स्वस्थ आत्मनि
तिष्ठामि यन्ममास्ति तदस्तु मे॥ इति संचिंत्य जनको यथाप्राप्तक्रि
यामसौ॥ असक्तः कर्त्तुमुत्तस्थौ दिनं दिनपतिर्यथा॥ भविष्यन्ना
नुसंधत्ते नातीतं चिंतयत्यसौ॥ वर्त्तमाननिमेषं तु हसन्नेवानुव
र्त्तत इति॥ तदेवं यथोक्तेन वासनाक्षयेण यथोक्ता जीवन्मुक्तिर्भव
तीति सुस्थितं॥ इति वासनाक्षयः॥ अथ जीवन्मुक्तिसाधनं म
नोनाशं च निरूपयामः॥ यद्यप्यशेषवासनाक्षये सति अर्थान्म

नोनश्यत्येव॥तथापिस्वातंत्र्येणमनोनाशेसम्यगभ्यस्तेसतिवास
नाक्षयोरक्षितोभवति॥नचाजिह्वत्वषंडकत्वाद्यभ्यासेनैवतद्द्व
स्यासिद्धेतिवाच्यं॥नष्टेमनसिअजिह्वत्वादीनामर्थात्सिद्धत्वेना
भ्यासप्रयासाभावात्॥ननुमनोनाशाभ्यासस्तत्राप्यस्तीतिचेद
स्तुनामतस्यावश्यकत्वात्॥अंतरेणमनोनाशमभ्यस्ताअपिअ
जिह्वत्वादयोअस्थिराभवंति॥अतएवमनसोनाशनीयत्वंज
नकआह॥सहस्रांकुरशाखात्मफलपल्लवशालिनः॥अस्य
संसारवृक्षस्यमनोमूलमितिस्थितं॥संकल्पमेवतन्मन्येसंकल्पोप
शमंमनोमूलमितिस्थितं॥संकल्पमेवतन्मन्येसंकल्पोपशमेनत
त्॥शोषयामियथाशोषमेतिसंसारपादपः॥प्रबुद्धोस्मिप्रबुद्धोस्मि
दुष्टश्चोरोऽयमात्मनः॥मनोनामानिहन्म्येनंमनसास्मिचिरंहृतइति॥
वसिष्ठोप्याह॥अस्यसंसारवृक्षस्यसर्वोपद्रवदायिनः॥उपायए
कएवास्तिमनसःस्वस्यनिग्रहः॥मनसोभ्युदयोनाशोमनोनाशो
महोदयः॥ज्ञमनोनाशमभ्येतिमनोऽज्ञस्यहिशृंखला॥तावन्नि
शीथवेतालावल्गंतिहृदिवासना॥एकतत्त्वदृढाभ्यासाद्यावन्नविजि
तंमनः॥प्रक्षीणचित्तदर्पस्यनिगृहीतेंद्रियद्विषः॥पद्मिन्यइवहे
मंतेक्षीयंतेभोगवासना॥हस्तंहस्तेनसंपीड्यदंतैर्दंतान्विचूर्ण्य
च॥अंगान्यंगैःसमाक्रम्यजयेदादौस्वकंमनः॥एतावतिधरणि
तलेसुभगास्तेसाधुचेतनाःपुरुषाः॥पुरुषकथासुचगण्यानजि
तायेचेतसास्वेन॥हृदयबिलेकृतकुंडलउल्बणकलनाविषोम
नोभुजंगः॥यस्योपशांतिमगमत्चंद्रवदुदितंतमव्ययंवंदे॥
चित्तंनाभिःकिलास्येदंमायाचक्रस्यसर्वतः॥स्थीयतेचेत्तदाक्रम्य
तन्नकिंचित्प्रबाधतइति॥गौडपादाचार्यैरप्युक्तम्॥मनसोनि
ग्रहायत्तमभयंसर्वयोगिनां॥दुःखक्षयःप्रबोधश्चाप्यक्षयाशांतिरेव
च॥इतिअर्जुनेनोक्तम्॥चंचलंहिमनःकृष्णप्रमाथिबलवद्दृढं॥
तस्याहंनिग्रहंमन्येवायोरिवसुदुष्करमित्येतद्वचनंहठयोगविष
यम्॥अतएववसिष्ठआह॥उपविश्योपविश्यैकचित्तकेनमुहुर्मुहुः
॥नशक्यतेमनोजेतुंविनायोगमनिंदितं॥अंकुशेनविनामत्तोयथा

दुष्टमत्तंगजः॥ विजेतुं शक्यते नैव तथा युक्त्या विना मनः॥ मनोविलय
हेतूनां युक्तीनां सम्यगीरणं॥ वशिष्ठेन कृतं तावत्तन्निष्ठस्य वशे मनः॥
गृह्णतो युक्तितश्चापि द्विविधो निग्रहो मतः॥ निग्रहो धीक्रियाऽक्षा
णां हठो गोलकनिग्रहात्॥ कदाचिज्जायते कश्चिन्मनस्तेन वि
लीयते॥ अध्यात्मविद्याधिगमः साधुसंगम एव च॥ वासनासंप
रित्यागः प्राणस्पंदनिरोधनं॥ एतास्ता युक्तयः पुष्टाः संति चित्तजये
किल॥ सतीषु युक्तिष्वेतासु हठान्नियमयंति ये॥ चेतस्ते दीपमुत्सृ
ज्य विनिघ्नंति तमोंजनैः॥ विमूढाः कर्तुमुद्युक्ता ये हठाच्चेतसो जयं॥
ते निबध्नंति नागेंद्रमुन्मत्तं बिसतंतुभिरिति॥ निग्रहो द्विविधः॥ ह
ठनिग्रहः क्रमनिग्रहश्चेति॥ तत्र चक्षुःश्रोत्रादिज्ञानेंद्रियाणि वाक्
पाण्यादिकर्मेंद्रियाणि तत्तद्गोलकोपरोधमात्रेण हठान्निगृह्यंते
॥ तद्दृष्टांतेन मनोपि तथा निग्रहीष्यामीति मूढस्य भ्रांतिर्भवति॥
न तु तन्निगृह्यते॥ तद्गोलकस्य हृदयकमलस्य निरोद्धुमशक्यत्वा
त्॥ अतः क्रमनिग्रह एव योग्यः॥ क्रमनिग्रहाय चाध्यात्मविद्या
प्राप्त्यादयश्चउपायाः॥ सा च दृश्यमिथ्यात्वं दृग्वस्तुसत्यत्वं स्वप्र
काशत्वं च बोधयति॥ तथा च सत्येतन्मनः स्वगोचरेषु दृश्येषु प्र
योजनाभावं॥ प्रयोजनवति दृग्वस्तुन्यगोचरत्वं बुध्वा निरिंधना
ग्निवत्स्वयमेवोपशाम्यति॥ तथा च श्रूयते॥ यथा निरिंधनो वह्निः
स्वयमेवोपशाम्यति॥ तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति
॥ योनिरालायस्तु बोधितमपि तत्त्वं न सम्यग्बुध्यते॥ यश्च विस्म
रति॥ तयोरुभयोः साधुसंगम एवोपायः॥ साधवो हि पुनःपुन
र्बोधयंति स्मारयंति च॥ यस्तु विद्यामदादिदुर्वासनया पीड्यमानो
न साधूननुवर्तितुमुत्सहते॥ तस्य पूर्वोक्त विवेकेन वासनापरि
त्यागोउपायः॥ वासनानाम ति प्राबल्येन त्यक्तुमशक्यत्वे प्राण
स्पंदनिरोधोउपायः॥ प्राणस्पंदनवासनयोश्चित्तप्रेरकत्वात्॥ त
योर्निरोधे चित्तशांतिरुपपद्यते॥ प्रेरकत्वं च वसिष्ठ आह॥ द्वे बीजे
चित्तहंसस्य वृत्तिव्रततिधारिणं॥ एकं प्राणपरिस्पंदो द्वितीयं दृढ
भावना॥ सती सर्वगता संवित्प्राणस्पंदेन बोध्यते॥ संवेदनादनंत

नितत्तोदुःखानिचेतस इति॥यथाभस्मछन्नमग्निंलोहकारः दृतिभ्यां धमति॥तत्रचदृत्युत्पन्नवायुनासोग्निर्ज्वलति॥तथा॥चित्तोपादानेनकाष्ठस्थानीयेनाज्ञानेनावृत्तासंविलप्राणस्पंदेनबो-
ध्यमानाचित्तवृत्तिरूपेणप्रज्वलति॥तस्माच्चित्तवृत्तिरूपात्संविज्ज्वालारूपात्संवेदनात्दुःखान्युत्पद्यंते॥सेयंप्राणस्पंदेनप्रेरिताचित्तोत्पत्तिः॥अन्यांचसएवाह॥भावसंवित्प्रकटितामनुभूतांचराघव
चित्तस्योत्पत्तिमपरांवासनाजनितांशृणु॥दृढाभ्यस्तपदार्थैकभाव-
नादतिचंचलं॥चित्तंसंजायतेजन्मजरामरणकारणमिति॥नकेवलंप्राणवासनयोश्चित्तप्रेरकत्वं किंतुपरस्परप्रेरकत्वमप्यस्ति॥तदा
ह वसिष्ठः॥वासनावशतःप्राणस्पंदस्तेनचवासनाक्रियतेचित्तबीजस्यतेनबीजांकुरक्रम इति॥अतएवान्यतरनाशेनोभयनाशमप्या
ह॥द्वेबीजेचित्तवृक्षस्यप्राणस्पंदनवासने॥एकस्मिंश्च तयोःक्षीणेक्षिप्रंद्वेअपिनश्यत इति॥तयोर्नाशोपायंनाशफलंचाह॥प्राणायामदृढाभ्यासैर्युक्त्याचगुरुदत्तया॥आसनाशनयोगेनप्राणस्पंदो
निरुध्यते॥असंगव्यवहारित्वाद्भवभावनवर्जनात्॥शरीरनाशदर्शित्वाद्वासनानप्रवर्तते॥वासनासंपरित्यागाच्चित्तंगच्छत्यचि-
त्ततां॥प्राणस्पंदनिरोधाच्चयथेच्छसितथाकुरु॥एतावन्मात्रकंमन्येरूपंचित्तस्यराघव॥यद्भावनंवस्तुनोंतर्वस्तुत्वेनरसेनच॥यदानभाव्यतेकिंचिद्धेयोपादेयरूपियत्॥स्थीयतेसकलंत्यक्त्वातदाचित्तंन
जायते॥अवासनत्वात्सततंयदानमनुतेमनः॥अमनस्तातदोदेतिपरमोपशमप्रदेति॥अमनस्तायुद्देयेशांत्यभावमाह॥चित्तयक्ष
दृढाक्रांतंनमित्राणिनबांधवाः॥शक्नुवंतिपरित्रातुंगुरवोनचमानवमिति॥आसनाशनयोगेनेतियदुक्तंतत्रासनस्वलक्षणमु पायंफलंचत्रिभिःसूत्रैःपतंजलिःसूत्रयामास॥स्थिरसुखमासनं॥प्रयत्नशैथिल्यानंतसमापत्तिभ्यां॥ततोद्वंद्वानभिघातइति॥पद्मकस्वस्तिकादिनायादृशेनदेहस्थापनरूपेणयस्यपुरुषस्यावयवव्यथानुत्पत्तिलक्षणंसुखं॥देहचलत्वराहित्यलक्षणंस्थैर्यंचसंपद्यते॥तस्यतदे-वसुखमासनं॥तस्यचप्रयत्नशैथिल्यंलौकिक

उपायः॥गमनगृहकृत्यतीर्थयात्रास्नानयागहोमादिविषयोयः
प्रयत्नोमानसउत्साहः॥तस्यशैथिल्यंकर्तव्यं॥अन्यथासउत्सा
हःबलात्देहसुस्थाप्ययत्नक्कापिप्रेरयतिअलौकिकउपायमाह
फणासहस्रेणधरणींधारयित्वास्थैर्येणावतिष्ठतेयोऽयमनंतःसएव
वाहमस्मीतिध्यानं॥चित्तस्यानंतेसमापत्ति॥तथायथोक्तआसन
संपादकमदृष्टंनिष्पद्यते॥सिद्धेचासनेशीतोष्णसुखदुःखावमाना
दिद्वंद्वैर्यथापूर्वंनाभिहन्यते॥तथाविधस्यचासनस्ययोग्योदेशः
श्रूयते॥विविक्तदेशेचसुखासनस्थःशुचिःसमग्रीवशिरःशरीरइ
ति॥समेशुचौशर्करावह्निवालुकादिभिर्विवर्जितेशब्दजलाश्रया
दिभिः मनोनुकूलेनतुचक्षुःपीडनेगुहानिवाताश्रयेणप्रयोजये
त्।इतिचसोयमासनयोगः॥अशनयोगस्तुमिताहारत्वं॥अत्या
हारमनाहारंनित्यंयोगीविवर्जयेत्॥इतिश्रुतेः॥भगवताप्युक्तम्
नात्यश्नतस्तुयोगोस्तिनचैकांतमनश्नतः॥नचातिस्वप्नशीलस्य
जाग्रतोनैवचार्जुन॥युक्ताहारविहारस्ययुक्तचेष्टस्यकर्मसु॥यु
क्तस्वप्नावबोधस्ययोगोभवतिदुःखहेति॥जितासनस्यप्राणाया
मेनमनोविनाशःश्वेताश्वतरैराम्नायते॥त्रिरुन्नतंस्थाप्यसमंशरी
रंहृदींद्रियाणिमनसासन्निवेश्य॥ब्रह्मोडुपेनप्रतरेतविद्वान्।
स्रोतांसिसर्वाणिभयावहानि॥प्राणान्प्रपीड्येहसयुक्तचेष्टःक्षी
णेप्राणेनासिकयोःश्वसीत॥दुष्टाश्वयुक्तमिववाहमेनंविद्वान्मनो
धारयेताप्रमत्तः॥योगीद्विविधः॥विद्यामदाद्यासुरीसंपद्रहि।
तस्तत्सहितश्चेति॥तयोराद्यस्यब्रह्मध्यानेनमनसिनिरुद्धेसति
तन्नांतरीयकतयाप्राणोनिरुध्यते॥तंप्रतित्रिरुन्नतमितिमंत्रः
पठितः॥द्वितीयस्याभ्यासेनप्राणेनिरुद्धेतन्नांतरीयकतयाम
नोनिरुध्यते॥तंप्रतिप्राणान्प्रपीड्येतिमंत्रप्रवृत्तः॥प्राणपीड
नमकारेवक्ष्यते॥तेनचपीडनेनयुक्तचेष्टोभवति॥मनश्चेष्टा।
विद्यामदादयोनिरुध्यंते॥प्राणनिरोधेनचित्तदोषनिरोधे दृ
ष्टांतोन्यत्रश्रूयते॥यथापर्वतधातूनांदह्यंतेधमनान्मलाः॥
तथेंद्रियकृतादोषादह्यंतेप्राणनिग्रहादिति॥अत्रोपपत्तिर्वा।

सिष्टेन दर्शिता ॥ यः प्राणपवनस्पंदः चित्तस्पंदः स एव हि ॥ प्राणस्पं
दजयेयत्नः कर्तव्यो धीमतोच्चकैरिति ॥ मनोवाक्चक्षुरादींद्रियदे
वताः स्वस्वव्यापारं निरंतरं करिष्याम इति व्रतं धृत्वा श्रमरूपेण मृ
त्युना ग्रस्ताः स च मृत्युः प्राणं नाप्नोत्ततो निरंतरमुच्छ्वसनिःश्वसो
कुर्वन्नपि प्राणेन श्राम्यति ॥ तदा विचार्य देवताः प्राणरूपं प्रविश
न् ॥ सोयमर्थो वाजसनेयिभिराम्नायते ॥ अयं वै नः श्रेष्ठो यः संचरं
श्चासंचरंश्च न व्यथते यो न रिष्यति हंत तस्यैव सर्वे रूपमसामेति ॥
एतस्यैव सर्वे रूपमभवंस्तस्मादेत एतेनाख्यायंत प्राणा इति ॥ अ
त इंद्रियाणां प्राणरूपत्वान्नाम प्राणाधीनचेष्टावत्त्वं ॥ तच्चांतर्यामि
ब्राह्मणे सूत्रात्मप्रस्तावे श्रूयते ॥ वायुर्वै गौतम सूत्रं ॥ वायुना वै गौ
तम सूत्रेणायं च लोकः ॥ परश्च लोकः सर्वाणि च भूतानि संदृब्धा
नि भवंति ॥ तस्माद्वै गौतम पुरुषं प्रेतमाहुर्व्यस्रंसिषतास्यांगानी
ति ॥ वायुना हि गौतम सूत्रेण संदृब्धानि भवंतीति ॥ अतः प्राणमन
स्पंदयोः सहभावित्वात्प्राणनिग्रहे मनो निगृह्यते ॥ ननु सहस्पंदो
न युक्तः सुषुप्तौ चेष्टमानेपि प्राणे मनसोऽचेष्टमानत्वात् न ॥ विली
नत्वेन तदानीं मनस एवाभावात् ॥ ननु क्षीणे प्राणे नासिकयोः श्व
सीतेति हि व्याहृतं न हि क्षीणप्राणस्य मृतस्य श्वासं कश्चित्पश्यामः
नापि श्वसतो जीवतः प्राणक्षयोस्ति ॥ मैवं ॥ अनुल्बणत्वस्य क्षय
त्वेनात्र विवक्षितत्वात् ॥ यथा खननच्छेदनादिषु व्याप्रियमाणस्य
पर्वतमारोहतः शीघ्रं धावतो वा श्वासवेगोल्बणो भवति ॥ न तावां
स्त्ववस्थितस्यासीनस्य वा विद्यते ॥ तथा प्राणायामपाटवोपेत
स्य तस्याल्पः श्वासो भवति ॥ एतदेवाभिप्रेत्य श्रूयते ॥ भूत्वा तत्राय
तप्राणः शनैरेव समुच्छ्वसेदिति ॥ यथा दुष्टैरश्वैरुपेतो रथो मार्गं त्यक्त्वा
यत्र क्वापि नीयते ॥ स च सारथिना दृढमश्वरज्जुधाकृष्य मार्गेषु पु
नर्धार्यते ॥ तथेंद्रियैर्वासनाभिरितस्ततो नीयमानं मनः प्राणरज्ज्वा
दृढं धारितायां धार्यते ॥ प्राणान्प्र पीड्येति यदुक्तं तत्र प्राणपीडनप्र
कारोऽन्यत्र श्रूयते ॥ सव्याहृतिकां सप्रणवां गायत्रीं शिरसा सह ॥
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ प्राणायामास्त्रयः प्रो

क्ता रेचपूरककुंभकाः।।उत्क्षिप्यवायुमाकाशंशून्यंकृत्वानिरात्मकं
।।शून्यभावेनयुंजीयाद्रेचकस्येतिलक्षणं।।वक्त्रेणोत्पलनालेनतो
यमाकर्षयेन्नरः।।एवंवायुर्गृहीतव्यः पूरकस्येतिलक्षणं।।नोच्छ्वसे
न्नचनिःश्वासेन्नैवगात्राणिचालयेत्।।एवंतावन्नियुंजीतकुंभ
कस्येतिलक्षणमिति।।शरीरांतर्गतंवायुंबहिर्निःसारयितुंउत्क्षि
प्यशरीरमाकाशंशून्यंनिरात्मकंवायुरहितंकृत्वास्वल्पमपिवायुं
अप्रवेश्यशून्यभावेनैवनियमयेत्।।तदिदंरेचकंभवति।।कुंभको
द्विविधः।।आंतरोबाह्यश्चेति।।तदुभयंचवसिष्ठआह।।अपानेस्तं
गतेप्राणोयावन्नाभ्युदितोहृदि।।तावत्साकुंभकावस्थायोगिभि
र्यानुभूयते।।बहिरस्तंगतेप्राणेयावन्नापानउद्भवः।।तावत्पूर्णसमा
वस्थंबहिष्ठंकुंभकंविदुरिति।।आंत्रोच्छ्वासनिश्वासौप्राणापानौ
उच्छ्वासआंतरकुंभविरोधीनिःश्वासोबाह्यकुंभविरोधीगात्रचा
लनमुभयविरोधितस्मिन्सतिनिश्वासोच्छ्वासयोरन्यतरस्यावश्यं
भावित्वात्।।पतंजलिरपिआसनानंतरभाविनंप्राणायामंसूत्र
यामास।।तस्मिन्सतिनिश्वासप्रश्वासयोर्गतिविच्छेदःप्राणायामः
ननुकुंभकेगत्यभावेपिरेचकपूरकयोरुच्छ्वासनिश्वासगतीविद्य
तेइति चेन्न।।अधिकमात्राभ्यासेनस्वभावसिद्धायाःसमप्राणग
तेःविच्छेदात्।।तमेवाभ्यासंसूत्रयति।।बाह्याभ्यंतरस्तंभवृत्तिःदे
शकालसंख्यादिभिःपरिदृष्टोदीर्घःसूक्ष्मइति।।रेचकोबाह्यवृत्तिः
पूरकआंतरवृत्तिःकुंभकस्तंभवृत्तिःतत्रैकैकोदेशादिभिःपरीक्षणीयःतद्य
था।।स्वभावसिद्धेरेचकेहृदयान्निर्गत्यनासाग्रसंमुखेद्वादशां
गुलपर्यंतेश्वासःसमाप्यते।।अभ्यासेनतुक्रमेणनाभेराधारा
द्वावायुर्निर्गच्छति।।चतुर्विंशत्यंगुलपर्यंतेषट्त्रिंशदंगुलपर्यं
तेवासमाप्तिः।।अत्ररेचकेप्रयत्नातिशयेसतिनाभ्यादिप्रदेश
क्षोभेणांतर्निश्चेतुंशक्यं।।बहिस्तुसूक्ष्मंतूलंधृत्वातच्चालनेन
निश्चेतव्यं।।सेयंदेशपरीक्षा।।रेचककालेप्रणवस्यावृत्तयोदशविं
शतित्रिंशदादिभिःकालपरीक्षा।।अस्मिन्मासेप्रतिदिनंदशरेच
काआगामिमासेविंशतिउत्तरमासेत्रिंशतइत्यादिभिः संख्याप

रिक्षा यथोक्तदेशकालविशिष्टाः प्राणायामा एकस्मिन् दिने दश विं
शतिं प्रादिस्यादिभिः संख्यापरिसापूरके ष्वेवं योजनीयं यद्यपि
कुंभके देशव्याप्तिविशेषो नावगम्यते॥ तथापि कालसंख्याव्याप्ति
रवगम्यते इति॥ यथा घनीभूतस्तूलपिंडः प्रसार्यमाणो दीर्घो विरल
तया सूक्ष्मश्च भवति॥ तथा प्राणोपि देशकालसंख्याधिक्येनाभ्य
स्यमानो दीर्घो दुर्लक्ष्यतया सूक्ष्मश्च संपद्यते॥ रेचकादिभ्यस्त्रिभ्यो
यं प्रकारं सूत्रयति॥ बाह्याभ्यंतरविषयानपेक्षी चतुर्थ इति॥ यथा
शक्ति सर्ववायुविरेच्यानंतरं क्रियमाणो बहिः कुंभको यथाशक्ति
वायुमापूर्यानंतरं क्रियमाणोंतः कुंभकः रेचकपूरकावनादृत्य
केवलः कुंभकोभ्यस्यमानः पूर्वत्रापेक्ष्य या चतुर्थो भवति॥ निद्रातं
द्र्यादिप्रबलदोषयुक्तानां रेचकादित्रयं॥ दोषरहितानां च चतुर्थ इ
ति विवेकः॥ प्राणायामफलं सूत्रयति॥ ततः क्षीयते प्रकाशावरण
मिति॥ प्रकाशस्य तत्वस्यावरणं तमो निद्रालस्यादिहेतुः तस्य क्ष
यो भवति॥ फलांतरं सूत्रयति॥ धारणासु योग्यता मनस इति॥
आधारनाभिचक्रहृदयभ्रूमध्ये ब्रह्मरंध्रादिदेशविशेषे चित्तस्य
स्थापनं धारणा देशबंधश्चित्तस्य धारणेति सूत्रणात्॥ श्रुतिश्च म
नः संकल्पकं ध्यात्वा संक्षिप्यात्मनि बुद्धिमान् धारयित्वा तथात्मा
नं धारणा परिकीर्तितेति॥ प्राणायामेन रजोगुणकारितात् चांचल्या
त्तमोगुणकारितादालस्यादेश्च निवारितं मनस्तस्यां धारणायां यो
ग्यं भवति॥ प्राणायामदृढाभ्यासे युक्त्या च गुरुदत्तया इति॥ अत्र
स्येन युक्तिशब्देन योगिजनप्रसिद्धशिरोरूपमेरुचालनं॥ जिह्वा
ग्रेण घंटिकाभ्रामणं नाभिचक्रे ज्योतिर्ध्यानं विस्मृतिप्रदोषधर्से
वा चेत्येवमादिकं गृह्यते तदेवमभ्यासविद्यासाधुसंगमवासना
क्षयप्राणनिरोधाश्चित्तनाशोपाया दर्शिताः॥ अथ तदुपायभूतं
समाधिं वक्ष्यामः॥ पंचभूम्युते तस्य चित्तस्य भूमित्रयत्यागेनावशिष्टं भू
मिद्वयं समाधिः॥ चित्तभूमयश्च योगभाष्यकृता दर्शिताः॥ क्षि
प्तं मूढं विक्षिप्तं एकाग्रं निरुद्धमिति चित्तभूमय इति॥ आसुर
संपन्नो कशास्त्रे देहवासनाप्रवर्तमानं चित्तं क्षिप्तं॥ निद्रातंद्रा

दिग्रस्तं मूढं। कदाचित्क ध्यानयुक्तं क्षिप्ताद्विशिष्टतया विक्षिप्तं॥ त
त्र क्षिप्तमूढयोः॥ समाधिशंकैव नास्ति॥ विक्षिप्ते तु चेतसि विक्षेपोप
सर्जनीभूतः समाधिर्योगपक्षे निवर्तते॥ विक्षेपांतर्गतत्वात् दहनांत
र्गतबीजवत्स्वयमेव नश्यति॥ यस्त्वेकाग्रे तु चेतसि सद्भूतमर्थं द्योतय
ति॥ क्षिणोति च क्लेशान् कर्मबंधादिश्लथयति॥ निरोधमभिमुखीक
रोति स संप्रज्ञातो योग इत्याख्यायते॥ सर्ववृत्तिनिरोधे तु असंप्रज्ञा
तः समाधिः॥ तत्र संप्रज्ञातसमाधिभूमिकैकाग्रतां सूत्रयति॥ शां
तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणाम इति॥ शांतोऽतीतउ
दितो वर्तमानप्रत्ययाश्चित्तवृत्तिः अतीतप्रत्ययो यं पदार्थं गृह्णाति
तमेव चेदुदितो गृह्णीयात तावुभौ तुल्यौ भवतः॥ तादृशश्चित्तस्य
परिणाम एकाग्रतेत्युच्यते॥ एकाग्रताभिहद्धिलक्षणं समाधिं सू
त्रयति॥ सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणा
म इति रजोगुणेन चाल्यमानं चित्तं क्रमेण सर्वान् पदार्थान् गृह्णा
ति॥ तस्य रजोगुणस्य निरोधाय क्रियमाणेन योगिनः प्रयत्नविशे
षेण दिने दिने सर्वार्थता क्षीयते॥ एकाग्रता चोदेति॥ तादृशश्चि
त्तस्य परिणामः समाधिरित्युच्यते॥ तस्य समाधेरंगेषु यमनि
यमासनप्राणायामप्रत्याहाराः पंच बहिरंगानि॥ तत्र यमान्
सूत्रयति॥ अहिंसासत्यमस्तेयब्रह्मचर्यापरिग्रहा यमा इति॥
हिंसादिभ्यो निषिद्धधर्मेभ्यो योगिनं यमयंतीति यमाः॥ नियमान्
सूत्रयति॥ शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमा इ
ति॥ जन्महेतोः काम्यधर्मान्निवर्त्य मोक्षहेतौ निष्कामधर्मे निय
मयंति प्रेरयंतीति नियमाः॥ यमनियमयोरनुष्ठानवैलक्षण्यं स्म
र्यते॥ यमान्सेवेत सततं न नित्यं नियमान्बुधः॥ यमान्पतत्यकुर्वा
णो नियमान्केवलान्भजन् पतति नियमवानुयमेष्वसक्तो न तु य
मवान्नियमालसोऽवसीदेत्॥ इति यमनियमौ समीक्ष्य बुद्ध्या य
मबहुलेष्वनुसंदधीत बुद्धिमिति॥ यमनियमफलानि सूत्रयति
तत्सन्निधौ वैरत्यागः॥ क्रियाफलाश्रयत्वं रत्नोपस्थानं॥ वीर्यला
भः॥ जननादिभयाभावः जन्मकथंतासंबोधः॥ शौचात्स्वांगजु

जुगुप्सापरैरसंसर्गः॥सत्त्वशुद्धिःसौमनस्यैकाग्र्येंद्रियजयात्मदर्शन
योग्यत्वानिचसंभवंति॥संतोषादनुत्तमःसुखलाभः॥कायेंद्रिय
बुद्धिशुद्धिरशुद्धिक्षयात्तपसःस्वाध्यायादिष्टदेवतासंप्रयोगः॥
समाधिसिद्धिरीश्वरप्रणिधानादिति॥आसनप्राणायामौव्या
ख्यातौ॥प्रत्याहारं सूत्रयति॥स्वविषयाऽसंप्रयोगेचित्तस्वरूपा
नुकारइवेंद्रियाणांप्रत्याहारइति॥शब्दस्पर्शरूपरसगंधाविष
यास्तेभ्योनिवर्तिताःश्रोत्रादयःचित्तस्वरूपमनुकुर्वंतीवव्यतिष्ठं
ते॥श्रुतिश्चभवति॥शब्दादिविषयाःपंचमनश्चैवातिचंचलं॥
चिंतयेदात्मनोरश्मीन्प्रत्याहारःसउच्यतइति॥शब्दादयोविष
यायेषांश्रोत्रादीनांतेश्रोत्रादयोपंचमनःषष्ठानामेतेषामनात्मरू
पेभ्यःशब्दादिभ्योनिवर्तनमात्मरश्मित्वेनचिंतनंप्रत्याहारःसइत्य
र्थः॥प्रत्याहारफलंसूत्रयति॥ततःपरमावश्यतेंद्रियाणामिति
॥धारणाध्यानसमाधीन्सूत्रैस्त्रिभिःसूत्रयति॥देशबंधश्चित्त
स्यधारणा॥तत्रप्रत्ययैकतानताध्यानं॥तदेवार्थमात्रनिर्भासं
स्वरूपशून्यमिवसमाधिरिति॥आधारादिदेशाःपूर्वमुक्ताः॥
देशांतरंश्रूयते॥मनःसंकल्पकंध्यात्वासंक्षिप्यात्मनिबुद्धिमान्
॥धारयित्वातथात्मानंधारणापरिकीर्तितेति॥यत्सर्ववस्तुसंक
ल्पकंमनःध्यात्वासंक्षिप्यात्मनितदात्मानमेवसंकल्पयतुनत्व
न्यदित्येवंविधःप्रयत्नआत्मनिसंक्षेपः॥प्रत्ययस्यैकतानताध्या
नंतत्त्वैकविषयप्रवाहःसचद्विविधः॥विच्छिद्यविच्छिद्यजायमा
नःसंततश्चेति॥तावुभौक्रमेणध्यानसमाधीभवतः॥तदुभयं
सर्वानुभवयोगिनादर्शितं॥चित्तैकाग्र्यवतोज्ञानमुक्तंसमुपजायते
॥तत्साधनमतोध्यानंयथावदुपदिश्यते॥विलाप्यवि—कृतिं
कृत्स्नांसंभवव्यत्ययक्रमात्॥परिशिष्टंचसन्मात्रंचिदानंदंविचिं
तयेदिति॥ब्रह्माकारमनोवृत्तिप्रवाहोहंकृतिंविना॥संप्रज्ञात
समाधिःस्यात्ध्यानाभ्यासप्रकर्षतइति॥तंचभगवत्पादाउदा
जह्रुः॥दृशिस्वरूपंगगनोपमंपरंसकृद्विभातंत्वजमेकमक्षरं॥
अलेपकंसर्वगतंयदद्वयंतदेवचाहंसततंविमुक्तॐ॥दृशिस्तुशुद्धो

हमविक्रियास्यकोनमेस्तिकश्चिद्विक्रियःस्वभावतः॥पुरस्तिरश्चोर्ध्व
मधश्चसर्वतःसंपूर्णभूमात्वजआत्मनिस्थितः॥अजोमरश्चैवत
थाजरोमृतःस्वयंप्रभःसर्वगतोहमद्वयः॥नकारणंकार्यमतीव
निर्मलःसदैवतृप्तश्चततोविमुक्तॐमिति॥ननुसंप्रज्ञातसमा
धिरंगीसकथंध्यानानंतरभाविनोऽष्टमांगस्यसमाधेःस्थानेउदा
हृतः॥नायंदोषः॥अत्यंतभेदाभावात्॥यथावेदमधीयानोमाणव
कःपदेपदेस्खलन्पुनःपुनःसमादधाति॥अधीतवेदःसावधा
नोनस्खलति॥अध्यापकोनिरवधानस्तंद्रींकुर्वन्नपिनस्खल
ति॥तथाविषयैक्येपिपरिपाकतारतम्येनध्यानसमाधिसंप्रज्ञात
नामवांतरभेदोवावगंतव्यः॥धारणादित्रयंमनोविषयत्वात्संप्र
ज्ञातेंतरंगं॥यमादिपंचकंतुबहिरंगं॥तदेतत्सूत्रयति॥त्रयमंतरंगं
पूर्वेभ्यइति॥ततःकेनापिपुण्येनांतरंगंप्रथमंलब्धेबहिरंगलाभा
यनातिप्रयासःकर्तव्यः॥यद्यपिपतंजलिनाभौतिकभूततन्मात्रें
द्रियाहंकारादिविषयाःसविकल्पकसमाधयोबहुधाप्रपंचिता
स्तथापितेषामंतर्द्धानादिसिद्धिहेतुतयामुक्तिहेतुसमाधिविरो
धित्वान्नास्माभिस्तन्नादरःक्रियते॥तथाचसूत्रितं॥तेसमाधावुप
सर्गाव्युत्थानेसिद्धयइति॥स्थान्युपमंत्रणेसंगस्मयाकरणंपुनर
निष्टप्रसंगादिति॥स्थानिनोदेवाःउद्दालकोदेवैरामंत्रितोप्यवज्ञा
यदेवान्निर्विकल्पकसमाधिमेवचकारेत्युपाख्यायते॥प्रश्नोत्त
राभ्यामप्येवंगम्यते॥ ॥श्रीरामः॥ ॥जीवन्मुक्तशरीराणांकथमा
त्मविदांवर॥शक्तयोनेहदृश्यंतेआकाशगमनादिकाः॥वसिष्ठः
॥अनात्मविदमुक्तोपिनभोविहरणादिकं॥द्रव्यमंत्रक्रियाका
लैःतैसहस्रुक्तिःयोगःतेनद्रव्यादियुक्तःसन्प्राप्नोतीत्यर्थः॥द्रव्यं
मंत्रक्रियाकालयुक्त्याप्नोत्येवराघव॥नात्मज्ञस्यैषविषयआत्म
ज्ञोह्यात्ममात्रदृक्॥आत्मनात्मनिसंतृप्तोनाविद्यामनुधावति॥
येकेचनजगद्भावास्तानविद्यामयान्विदुः॥कथंतेषुकिलात्मज्ञ
स्त्यक्ताविद्योनिमज्जति॥द्रव्यमंत्रक्रियाकालशक्तयःसाधुसि
द्धिदाः॥परमात्मपदप्राप्तौनोपकुर्वंतिकाश्चन॥सर्वेच्छाजालसं

शांतावात्मलाभोद्योह्ययः॥सकथंस्थिद्दिवांछायांमग्नचित्तेनल
भ्यतइति॥नकेचनजगद्भावास्तत्त्वज्ञंरंजयंत्यमी॥नागरंनागरी
कांतिंकुग्रामललनाइवेति॥अपिशीतरुचावर्केसुतीक्ष्णेचेंदु
मंडले॥अप्यधःप्रसरत्यग्नौजीवन्मुक्तोनविस्मयी॥चिदात्म
नइमाइत्थंप्रस्फुरंतीहशक्तयः॥इत्यस्याश्चर्यजालेषुनाभ्युदे
तिकुतूहलमितिच॥आत्मविषयैस्तुसंप्रज्ञातसमाधिःवासनाक्ष
यस्यनिरोधसमाधेश्चहेतुःतस्मात्तत्रादरःकृतः॥अथपंचमभू
मिरूपोनिरोधसमाधिर्निरूप्यते॥तंचनिरोधंचसूत्रयति॥व्यु
त्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौनिरोधक्षणचित्ता
न्वयोनिरोधपरिणामइति॥व्युत्थानसंस्काराःसमाधिविरोधि
नस्तेचोद्दालकस्यसमाधावुदाहृताः॥कदाहंत्यक्तमननेपदे
परमपावने॥चिरंविश्रांतिमेष्यामिमेरुशृंगइवांबुदः॥इतिचिं
तापरवशोबलादुद्दालकोद्विजः॥पुनःपुनरुपविश्य ध्याना
भ्यासंचकारह॥विषयैर्नीयमानेतुचित्तेमर्कटचंचले॥नसले
भेसमाधानप्रतिष्ठांप्रीतिदायिनीं॥कदाचिद्बा ह्यसंस्पर्शपरि
त्यागादनंतरं॥तस्यागच्छच्चित्तकपिरंतरस्पर्शसंश्रयात्॥क
दाचिदांतरस्पर्शाद्बा ह्यं विषयमाददे॥तस्योड्डीयमनोयाति
कदाचि त्रस्तपक्षिवत्॥कदाचिदुदिताकाभं तेजःपश्यति
विस्तृतं॥कदाचित्केवलंव्योमकदाचिन्निबिडंतम इति॥आ
गच्छतोयथाकामं प्रतिभासान्पुनःपुनः॥अच्छिनन्मनसाशूरः
खड्गेनेवरणेरिपून्॥विकल्पौघेसमांलूनेसोपश्यद्धृदयांबरे॥
तमःछन्नविवेकार्कलोलकज्जलमेचकं॥तमप्युत्सादयामास
सम्यक्ज्ञानविवस्वता॥तमस्युपरतेस्वांतेतेजःपुंजंददर्शसः
॥तद्व्युत्तावस्यलाज्ञानांवनंबालइवद्विपः॥तेजस्युपरतेत
स्यघूर्णमानंमनोमुनेः॥निशालोवदगान्निद्रांतामथासुलुला
वसः॥निद्राव्यपगमेतस्यव्योमसंवित्समुच्चयौ॥व्योमसंविद्विन
छायांमूढंतस्याभवन्मनः॥मोहमप्येषमनसस्तत्समाजेमहा
शयः॥ततस्तेजस्तमोनिद्रामोहादिपरिवर्जितां॥कामप्यव

स्थानासाद्यविराम्याममनःक्षणमितिच॥ तएतेषु व्युत्थानसंस्का
रनिरोधहेतुनायोगिप्रयत्नेनप्रतिदिनंप्रतिक्षणंचाभिभूयंतेत
द्विरोधिनश्च निरोधसंस्काराःप्रादुर्भवंति॥ तथासति निरोध
एकैकस्मिन्क्षणेचित्तमनुगच्छतिसोयमीदृशश्चितस्य निरोधप
रिणामोभवतिननुप्रतिक्षणपरिणामिनोहिभावाऋतेचितिश
क्तेरितिन्यायेनतथाचित्तस्यसर्वदापरिणामप्रवाहोवक्तव्यः।
बाढं॥ तत्रव्युत्थितचित्तस्यवृत्तिप्रवाहस्फुटः॥ निरुद्धचित्तस्यतु
कथमित्याशंक्योत्तरं सूत्रयति॥ ततःप्रशांतवाहितासंस्कारादि
ति॥ यथासमिदाज्याहुतिप्रक्षेपेवह्निरुत्तरोत्तरवृद्ध्याप्रज्वल
ति॥ समिदादिक्षयेप्रथमक्षणेकिंचिच्छाम्यति॥ उत्तरोत्तरक्षणे
षुशांतिर्वर्द्धते॥ तथानिरुद्धचित्तस्योत्तरोत्तराधिकःप्रशमःप्रव
हति॥ तत्रपूर्वपूर्वप्रशमजनितःसंस्कारएवोत्तरप्रशमस्यका
रणं॥ तामेतांप्रशांतांप्रशांतवाहितांभगवान्वसिष्ठमुदाज
हार॥ यदाविनियतंचित्तमात्मन्येवावतिष्ठते॥ निस्पृहःसर्व
कामेभ्योयुक्तइत्युच्यतेतदा॥ यथादीपोनिवातस्थोनेंगतेसोप
मास्मृता॥ योगिनोयतचित्तस्ययुंजतोयोगमात्मनः॥ यत्रोपरमते
चित्तंनिरुद्धंयोगसेवया॥ यत्रचैवात्मनात्मानंपश्यन्नात्मनितुष्य
ति॥ सुखमात्यंतिकंयत्तद्बुद्धिग्राह्यमतींद्रियं॥ वेत्तियत्रनचैवायं
स्थितश्चलतितत्त्वतः॥ यंलब्ध्वाचापरंलाभंमन्यतेनाधिकंततः॥
यस्मिन्स्थितोनदुःखेनगुरुणापिविचाल्यते॥ तंविद्यादुःखसंयोग
वियोगंयोगसंज्ञितं॥ सनिश्चयेनयोक्तव्योयोगोनिर्विण्णचेतसे
ति॥ निरोधसमाधेःसाधनंसूत्रयति॥ विरामप्रत्ययाभ्यासपूर्वकः
संस्कारशेषोन्यइति॥ विरामोवृत्तयुपरमःतस्यप्रत्ययःकारणंवृत्तु
परमार्थःपुरुषप्रयत्नःतस्याभ्यासःपौनःपुन्येनसंपादनंतत्पूर्वकः
स्तज्जन्यः॥ अनंतरातीतसूत्रेसंप्रज्ञातसमाधेरुक्तत्वात्तदपे
क्षयाऽन्योऽसंप्रज्ञातसमाधिस्तत्रवृत्तिरहितस्यचित्तस्वरूपस्य
दुर्लक्ष्यत्वात्संस्काररूपेणचित्तंशिष्यते॥ विरामप्रत्ययजन्यत्वं
भगवान्वसिष्ठआह॥ संकल्पप्रभवान्कामांस्त्यक्त्वासर्वानशे

षतः॥ मनसैवेंद्रियग्रामं विनियम्य समंततः॥ शनैः शनैरुपरमेद्बुद्ध्या
धृतिगृहीतया॥ आत्मसंस्थं मनः कृत्वा न किंचिदपि चिंतयेत्॥ यतो
यतो निश्चरति मनश्चंचलमस्थिरं। ततस्ततो नियम्यैतदात्मन्येव व
शं नयेत्॥ काम्यमानाः स्रक्चंदनवनितापुत्रमित्रगृहक्षेत्रादयो मो
क्षशास्त्रकुशलविवेकिजनप्रसिद्धैर्बहुभिर्दोषैरुपेता अपि अना
दिअविद्यावशात्तद्दोषानाच्छाद्य तेषु विषयेषु सम्यक्त्वं संकल्प
यंति॥ तस्माच्च संकल्पादिदं मे स्यादिदं मे स्यादित्येवंरूपाः कामाः प्र
भवंति॥ तथा च स्मर्यंते॥ संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः
॥ काम जानामि ते मूलं संकल्पात्किल जायसे इति॥ न त्वां संकल्पयि
ष्यामि समूलस्त्वं विनश्यसि॥ तत्र विवेकेन विषयदोषेषु साक्षात्कृ
तेषु सुनां वांतपायसवत्कामास्त्यज्यंते॥ स्रक्चंदनादिषु विषयेषु ब्र
ह्मलोकादिषु अणिमाद्यैश्वर्येषु च कामास्त्याज्या इत्यभिप्रेत्य सर्वा
नित्युक्तं मासोपवासव्रतिनां तस्मिन्मास्यन्ते त्यक्तेपि कामः पुनः पुनरु
देति तद्वन्माभूदित्यशेषत इत्युक्तं॥ कामत्यागे मनःपूर्वकप्रवृत्त्यभा
वेपि च चक्षुरादीनां रूपादिषु स्वभावसिद्धा प्रवृत्तिः सापि प्रयत्नयुक्ते
न मनसैव नियंतव्या॥ देवतादर्शनादिषु अपि अननुसरणाय समं
तत इत्युक्तम्॥ भूमिकाजयक्रमेणोपरमं विवक्षितत्वात् शनैः शनै
रित्युक्तं। ताश्च भूमिकाश्चतस्रः कठवल्लीषु श्रूयंते॥ यच्छेद्वाङ्मन
सी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि महति नियच्छेत्तद्यच्छेच्छांत आत्म
नीति॥ वाग्व्यापारो द्विविधः॥ जपादिरूपः लौकिको जपादिरूपो वै
दिकश्च॥ तत्र लौकिकस्य बहुविक्षेपकरत्वाद्व्युत्थानकालेपि योगी
तं परित्यजेत्॥ अत एव स्मर्यते॥ मौनं योगासनं योगस्तितिक्षैकांत
शीलता॥ निस्पृहत्वं समत्वं च सप्तैतान्येकदंडिनः इति॥ जपादिकं
निरोधसमाधौ परित्यजेत्॥ सेयं वाग्भूमिः प्रथमा तां भूमिं प्रयत्न
मात्रेण कतिपयैर्दिनैर्मासैर्वा दृढं विजित्य पश्चाद्द्वितीयायां मनोभू
मौ प्रयतेत॥ अन्यथा बहुभूमिकप्रासाद वत्प्रथमभूमिकापाते
नैवोपरितन्यो योगभूमयो विनश्येयुः॥ यद्यपि च चक्षुरादयो निरोद्ध
व्याः तथापि तेषां वाग्भूमौ मनोभूमौ चांतर्भावो द्रष्टव्यः॥ ननु वाचं म

नसिनियच्छेदित्यनुपपन्नं॥नहींद्रियस्येंद्रियांतरेप्रवेशोस्ति॥मैवं॥
प्रवेशस्यास्याविवक्षितत्वात्॥नानाविक्षेपकारिणोर्वाङ्मनसयो
र्मध्येप्रथमतोवाग्व्यापारनियमेनमनोव्यापारमात्रपरिशेषइह
विवक्षितःगोमहिषाश्वादीनामिववाङ्नियमेस्वाभाविकेसंपन्नेततो
ज्ञानात्मनिमनोनियच्छेत्॥आत्मात्रिविधः॥ज्ञानात्मामहानात्मा
शांतात्माचेति॥ज्ञानमत्रस्थितआत्मेतिज्ञातृत्वोपाधिरहंकारो
त्रज्ञानशब्देनविवक्षितः॥करणस्यमनसोनियम्यत्वेनपृथगुपात्त
त्वात्॥अहंकारोद्विविधः॥विशेषरूपःसामान्यरूपश्चेति॥अयमह
मेतस्यपुत्रइत्येवंव्यक्तमभिमन्यमानःसामान्यरूपः॥सचसर्वव्य
क्तिषुव्याप्तत्वान्महानित्युच्यते॥ताभ्यामहंकाराभ्यामुपहितौद्वावा
त्मानौ॥निरुपाधिकःशांतात्मातदेतत्सर्वमंतर्वहिर्भावेनवर्तते॥शां
तआत्मासर्वांतरश्चिदेकरसस्तस्मिन्नाश्रितंजडशक्तिरूपमव्यक्तं
मूलप्रकृतिःसाचप्रथमंसामान्याहंकाररूपंमहत्तत्वंनामधृत्वा
व्यक्तीभवति॥ततोवहिर्विशेषाहंकाररूपेणततोवहिर्मनोरूपेण
ततोवहिर्वागादींद्रियरूपेणतदेतदभिप्रेत्योत्तरमांतरत्वंविविन
क्तिश्रुतिः॥इंद्रियेभ्यःपराह्यर्थाअर्थेभ्यश्चपरंमनः॥मनसस्तुपराबु
द्धिर्बुद्धेरात्मामहान्परः॥महतःपरमव्यक्तमव्यक्तात्पुरुषःपरइ
ति॥एवंसतिअत्रनानाविधसंकल्पविकल्पसाधनंकरणरूपंम
नोहंकर्तरिनियच्छेत्॥मनोव्यापारान्परित्यज्याहंकारमात्रंशेषये
त्॥नचैतदशक्यमितिवाच्यं॥तस्याहंनिग्रहंमन्येवायोरिवसुदु
ष्करमिति॥वदंतमर्जुनंप्रतिभगवतोत्तराभिधानात्॥असंशयंम
हावाहोमनोदुर्निग्रहंचलं॥अभ्यासेनतुकौंतेयवैराग्येणचगृ
ह्यते॥असंयतात्मनायोगोदुःप्रापइतिमेमतिः॥वश्यात्मनातुय
तताशक्योऽवाप्तुमुपायतः॥इत्यभ्यासवैराग्येपतंजलिसूत्रोदा
हरणेनव्याख्यास्यते॥पूर्वपूर्वभूमिदार्ढ्यरहितोऽसंयतात्मा॥त
त्सहितोवश्यात्मा उपायतः प्राप्तिंगौडाचार्याःसदृष्टांतमाहुः॥
उत्सेकउदधेर्यद्वत्कुशाग्रेणैकविंदुना॥मनसोनिग्रहस्तद्वद्भ
वेदपरिखेदतः॥बहुभिर्नविरोद्धव्यंएकेनापिवलीयसा॥सप

राभवमाप्नोति समुद्र इव टिट्टिभात्॥ इत्यत्र संप्रदायविद आख्यायि
कामाचक्षते॥ कस्यचित्किल पक्षिणो डानि तीरस्थान्युदधिरुत्सेके
नापजहार॥ तं च समुद्रं शोषयामीति प्रवृत्तः स च पक्षी स्वमुखाग्रेण
चैकैकं जलविंदुं प्रतिक्षिपति॥ तदा बहुभिः पक्षिभिर्बंधुवर्गैर्वार्य
माणोप्यनुपरतः प्रत्युत तानपि सहकारिणो वव्रे॥ तांश्च पतनोत्स
तनाभ्यां बहुधा क्लिश्यतः सर्वानवलोक्य कृपालुर्नारदो गरुडं समी
पे प्रेषयामास॥ ततो गरुडपक्षपातेन शुष्यन्समुद्रो भीतस्तान्यंडानि
पक्षिणे ददौ॥ एवमखेदेन मनोनिरोधे परमधर्मे प्रवर्तमानं योगिनं
मीश्वरोनुगृह्णाति॥ अखेदस्य मध्ये मध्ये तदनुकूलव्यापारमिश्रणेन
संपद्यते॥ यथौदनं भुंजानस्तत्तद्ग्रासांतरे चोष्यलेह्यादीनास्वादय
ति तद्वत्॥ इदमेवाभिप्रेत्य वसिष्ठ आह॥ चित्तस्य भोगैर्द्वौ भागौ शास्त्रे
णैकं प्रपूरयेत्॥ गुरुशुश्रूषया भागमव्युत्पन्नस्य संक्रमः॥ किंचि
द्व्युत्पत्तियुक्तस्य भागं भोगैः प्रपूरयेत्॥ गुरुशुश्रूषया भागौ भागं शास्त्रा
र्थचिंतया॥ व्युत्पत्तिमनुयातस्य पूरयेच्चेतसोन्वहं॥ द्वौ भागौ शास्त्रवै
राग्याभ्यां द्वौ ध्यानगुरुपूजयेति॥ भोगशब्देनात्र जीवनहेतुर्भिक्षाटनादि
व्यापारो वर्णाश्रमोचितव्यापारश्चोच्यते॥ घटिकामात्रं मुहूर्तं वा यथा
शक्ति योगमभ्यस्य ततो मुहूर्तं शास्त्रश्रवणेन परिचर्यया वा गुरून
नुगम्य मुहूर्तं स्वदेहमनुसृत्य मुहूर्तं योगशास्त्रं पर्यालोच्य पुनर्मुहूर्तं
योगमभ्यसेत्॥ एवं योगप्राधान्येन व्यापारांतराणि मेलयेत्तानि द्राकु
अभ्यासस्य शयनकाले तद्दिनगतान्योगमुहूर्तान्गणयेत्॥ ततः परेद्यु
र्वापरपक्षे वा परमासे वा योगमुहूर्तान्वर्द्धयेत्॥ तथा चैकैकस्मिन्मुहू
र्ते एकैकक्षणयोगेपि संवत्सरमात्रेण भूयान्योगकालो भवति॥ न चै
वं योगैकप्रारणत्वे व्यापारांतराणि लुप्येरन्निति शंकनीयं॥ लुप्ततर
कस्तत्व्यापारस्यैव योगेधिकारात्॥ अत एव विद्वत्संन्यासोपेक्ष्यते
॥ तस्मात्तदेकनिष्ठः पुमानध्येतृवणिगादिवत्॥ क्रमेण योगारू
ढो भवति॥ यथाध्येता माणवकः पादं पादमर्द्धर्चमृचमृग्वर्गं च
क्रमेण पठन्दशवर्षैरध्यापको भवति॥ यथा च वाणिज्यं कुर्वन्ए
कनिष्कद्विनिष्कादिक्रमेण लक्षपतिः कोटिपतिर्वा भवति॥ तथा ता

भ्यांवणिकूअध्येतव्यांस्त्वेवोपक्रम्यमत्सरग्रस्तइवभुंजानस्तावता।
कालेनकुतोन्योगमात्रोहेत्॥तस्मात्पुनःपुनःप्राप्यमाणान्संकल्प
विकल्पानुद्दालकवत्पुरुषप्रयत्नेनपरित्यज्याहंकर्तरिज्ञानात्मनि
मनोनियच्छेत्॥तामेतांद्वितीयभूमिकांविजित्यबालमूकादिवन्निर्म
नस्त्वेस्वाभाविकेसतिततोविशेषाहंकाररूपंविस्पष्टंज्ञानात्मानमस्य
शेषसामान्याहंकारेमहत्तत्त्वेनियच्छेत्॥यथास्वल्पांतंद्वींप्राप्नुवतोवि
शेषाहंकारःसंकोचोभवति॥सेयंलोकप्रसिद्ध्यातंद्रातार्किका।
भिमतनिर्विकल्पकज्ञानेनचसमानामहत्तत्त्वमात्रपरिशेषावस्था
तृतीयाभूमिः॥अस्यांचाभ्यासपाटवेनवशीकृतायांतमेतंसामान्या
हंकाररूपंमहांतमात्मानंनिरुपाधितयाशांतेचिदेकरसस्वभावेनि
यच्छेत्॥महत्तत्त्वंतिरस्कृत्यचिन्मात्रंपरिशेषयेत्॥अत्रापिपूर्वोक्ता।
विस्मृतिप्रयत्नएवततोप्यतिशयेनोपायलाभापद्यते॥यथाशास्त्रा
भ्यासेप्रवृत्तस्यस्खलतः प्राक्प्रतिग्रंथंव्याख्यानापेक्षायामपिव्यु
त्पन्नस्यस्वतएवोत्तरग्रंथार्थःप्रतिभाति॥तथासम्यग्वशीकृतपूर्वभू
मेर्योगिनउत्तरभूम्युपायःस्वतएवप्रतिभाति॥तदाहयोगभाष्यका
रः॥योगेनयोगोज्ञातव्योयोगोयोगात्प्रवर्तते॥योऽप्रमत्तस्तुयोगेनसयो
गीरमतेचिरमिति॥योगउत्तरभूमिकायोगेनज्ञातव्योयोगोयोगात्प्रव
र्ततेयोयोगाप्रमत्तःयोगेनपूर्वभूमिकोत्तरभूमिकायोगेनसयोगेरम
तेचिरमिति॥ननुमहत्तत्त्वशांतात्मनोर्मध्येमहत्तत्त्वोपादानमव्यक्ता
ख्यंतत्त्वंश्रुत्योदाहृतं॥तत्रकुतोनियमनंनाभिधीयतइतिचेन्न॥
लयप्रसंगादितिब्रूमः॥यथाघटोऽनुपादानेजलेनिरुध्यमानोनली
यते॥उपादानभूतायांतुमृदिलीयते॥तथामहत्तत्त्वमात्मनिनली
यते॥अव्यक्तेतुलीयते॥नचस्वरूपलयःपुरुषार्थः॥स्वात्मदर्शना
नुपयोगात्॥दृश्यते त्वग्र्ययाबुद्ध्यासूक्ष्मयासूक्ष्मदर्शिभिरिति॥
पूर्ववाक्येऽभिधायसूक्ष्मत्वसिद्ध्येनिरोधस्याभिधानात्॥लयस्य
प्रतिदिनंसुषुप्तौस्वतःसिद्धत्वेनप्रयत्नवैयर्थ्याच्च॥ननुधारणाध्या
नसमाधिसाध्यस्यसंप्रज्ञातस्यैकाग्रवृत्तिरूपत्वेनदर्शनेहेतुत्वेपि।
शांतात्मन्यवरुद्धस्यासंप्रज्ञातसमाधिमापन्नस्यचित्तस्यवृत्तिरहितत्वे

नसुषुप्तिवन्नदर्शनहेतुत्वमितिचेन्न॥स्वतःसिद्धस्यदर्शनस्यनि
वारयितुमशक्यत्वात्॥अतएवश्रेयोमार्गेभिहितम्॥आत्मानां
त्माकारंस्वभावतोवस्थितंसदा।चित्तंआत्मैकाकारतयातिरस्कृता
नात्मदृष्टिर्विदधीतेति॥यथाघटोउत्पद्यमानःस्वतोवियत्पूर्णएवो
त्पद्यते॥जलतंदुलादिपूरणंउत्प न्नेघटेपश्चात्पुरुषप्रयत्नेन
भवति॥तत्रजलादौनिःसारितेपिनवियन्निःसारयितुंशक्यते॥मु
खपिधानेपिअंतर्वियद्वतिष्ठतएव॥तथाचित्तमुत्पद्यमानमा
त्मचैतन्यपूर्णमेवोत्पद्यते॥उत्पन्नेचित्तेपश्चान्मूषनिक्तद्रुतताम्र
वद्घटपटरूपरससुखदुःखादिवृत्तिरूपत्वंभोगहेतुधर्माधर्मादि
वशाद्भवति॥तत्ररूपरसाद्यनात्माकारेनिवारितेपिनिर्निमित्तश्चिदा
कारोनिवारयितुंशक्यते॥ततोनिरोधसमाधिनानिर्वृत्तिकेनसं
स्कारमात्रशेष्यतयासूक्ष्मत्वेनविद्यमानाभिमुखत्वादेकाग्रेण
चित्तेननिर्विघ्नमात्मानुभूयते॥अनेनैवाभिप्रायेणवार्तिककारस
र्वानुभवयोगिनावाहतुः॥घटदुःखादिरूपित्वंधियोधर्मादिहेतु
तः॥निर्हेतुत्वात्मसंवेधरूपित्वंवस्तुवृत्ततः॥प्रशांतवृत्तिकंचित्तंप
रमानंददायकं॥असंप्रज्ञातनामायंसमाधिर्योगिनांप्रियइति॥
आत्मदर्शनस्यस्वतःसिद्धत्वेप्यनात्मधारणाय निरोधाभ्यासः॥
अतएवोक्तम्॥आत्मसंस्थंमनःकृत्वानकिंचिदपिचिंतयेत्इति
योगशास्त्रस्यचित्तचिकित्सकसमाधिमात्रेप्रवृत्तत्वान्निरोधसमा
धावात्मदर्शनंनसाक्षादुक्तं॥भाष्यांतरेणत्वभ्युपगम्यते॥योगश्चि
त्तवृत्तिनिरोधइतिसूत्रयित्वातदाद्रष्टुःस्वरूपेणावस्थानमितिसू
त्रणात्॥यद्यपिनिर्विकारोद्रष्टासदास्वरूपएवावतिष्ठते॥तथापि
वृत्तिषूत्पद्यमानासुतत्रचिच्छायायांप्रतिबिंबितायांतदविवेकाद
स्वस्यइववद्रष्टाभवति॥तदप्यनंतरसूत्रेणोक्तं॥वृत्तिसारूप्यमि
तरत्रेति॥अन्यत्रापिसूत्रितम्॥सत्वपुरुषयोरत्यंतासंकीर्णयोः
प्रत्ययाविशेषोभोगःपरार्थत्वादिति॥चितेरप्रतिसंक्रमायास्तदा
कारापत्तौस्वबुद्धिसंवेदनमितिच॥निरोधसमाधिनाशोधितेत्वं
पदार्थेसाक्षात्कृतेपितस्यब्रह्मत्वंगोचरयितुंमहावाक्येनब्रह्मवि

द्यानामकं स्वहृत्स्यंतरमुत्पद्यते॥ नच शुद्धत्वं पदार्थसाक्षात्कारे नि
रोधसमाधिरेक एवोपायः॥ किंतु चिज्जडविवेकेनापि पृथक्कृते त
त्साक्षात्कारसंभवात्॥ अत एव वसिष्ठ आह॥ द्वौ क्रमौ चित्तनाशस्य यो
गो ज्ञानं च राघव॥ योगस्तद्वृत्तिरोधो हि ज्ञानं सम्यगवेक्षणमिति॥
असाध्यः कस्यचिद्योगः कस्यचिज्ज्ञाननिश्चयः॥ प्रकारौ द्वौ ततो दे
वो जगाद परमः शिव इति॥ ननु विवेकोपि योगे पर्यवस्यति दर्शनवे
लायामात्ममात्रगोचरायामेकाग्रवृत्तेः क्षणिकसंप्रज्ञातरूपत्वात्॥
बाढं तथापि संप्रज्ञातासंप्रज्ञातयोः स्वरूपतः साधनतश्चास्त्येव महद्वै
लक्षण्यं वृत्तिसद्भावाभ्यां स्फुटः स्वरूपभेदः॥ साधनं तु संप्रज्ञातस्य स
जातीयत्वाद्धारणादित्रयमंतरंगे असंप्रज्ञातस्य तु अवृत्तिकस्य वि
जातीयत्वाद्बहिरंगं॥ तथा च सूत्रं॥ तदपि बहिरंगं निर्बीजस्येति॥ वि
जातीयस्यापि बहुविधानात्मवृत्तिनिवारणेनोपकारितया बहिरंग
त्वमविरुद्धं॥ तदेवोपकारित्वं विशदयितुं सूत्रयति॥ श्रद्धावीर्यस्मृ
तिसमाधिप्रज्ञापूर्वक इतरेषामिति॥ केषांचिद्देवादीनां पूर्वसूत्रे
जन्मनैव समाधिरुक्तो मनुष्यान्प्रत्येतदुच्यते॥ ममायं योग एव पर
मपुरुषार्थसाधनमिति प्रत्ययः श्रद्धा सा चोत्कर्षश्रवणेनोपजायते
॥ तदुत्कर्षश्च स्मर्यते॥ तपस्विभ्योधिको योगी ज्ञानिभ्योपि मतोधि
कः॥ कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुनेति॥ उत्तमलोक
साधनत्वात्॥ कृच्छ्रचान्द्रायणादितपसो ज्योतिष्टोमादिकर्मणश्च
योगोधिकं ज्ञानं प्रत्यंतरंगत्वाच्चित्तविश्रांतिहेतुतया ज्ञानादप्यधि
कत्वं॥ एवं ज्ञानतो योगे श्रद्धा जायते॥ तस्यां च श्रद्धायां वासितायां
वीर्यमुत्साहो भवति॥ सर्वथा योगं संपादयिष्यामीति॥ एतादृशे
नोत्साहेन तदा तदनुष्ठेयानि योगांगानि स्मर्यंते॥ तथा च स्मृत्या
सम्यगनुष्ठितसमाधेरध्यात्मप्रसादे सत्यृतंभरा प्रज्ञोदेति॥ तत्प्र
ज्ञापूर्वकः तत्प्रज्ञाकारणको संप्रज्ञातसमाधिरितरेषां देवादिभ्यो
ऽर्वाचीनानां मनुष्याणां सिध्यति॥ तां च प्रज्ञां सूत्रयति॥ ऋतंभरा
तत्र प्रज्ञेति॥ ऋतं सत्यं वस्तु याथात्म्यं बिभर्ति प्रकाशयतीति ऋ
तंभरा तत्र तस्मिन्समाध्युत्कर्षजन्ये अध्यात्मप्रसादे सतीत्यर्थः॥

ऋतंभरत्वोपपत्तिं सूत्रयति॥श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशे
षार्थत्वादिति॥सूक्ष्मव्यवहितविप्रकृष्टवस्तुषु अयोगिप्रत्यक्ष
त्वं न प्रवर्तते॥आगमानुमानाभ्यां तानि वस्तूनि अयोगिभिर्ज्ञायंते॥इ
ते च शास्त्रानुमानजन्ये प्रज्ञे वस्तुसामान्यमेव गोचरयतः इदं तु योगि
प्रत्यक्षं विशेषवस्तुगोचरत्वादृतंभरं॥तस्य योगिप्रत्यक्षस्यासंप्र
ज्ञातसमाधौ बहिरंगत्वसिद्ध्यर्थमुपकारित्वं सूत्रयति॥तज्जः सं
स्कारोऽन्यसंस्कारप्रतिबंधीति॥असंप्रज्ञातसमाधेर्बहिरंगसाध
नमुक्त्वा तन्निरोधप्रयत्नस्यांतरंगसाधनतां सूत्रयति॥तस्यापि
निरोधे सर्वनिरोधान्निर्बीजः समाधिरिति॥सोऽयं समाधिः सुषु
प्तिसमानः साक्षिचैतन्येनानुभावितुं शक्यः॥न चासौ सर्वधीवृ
त्तिराहित्यात्सुषुप्तिरेवेति शंकनीयं॥मनःस्वरूपसदसत्त्वाभ्यां वि
शेषात्॥तदुक्तं गौडपादाचार्यैः॥निगृहीतस्य मनसो निर्विकल्प
स्य धीमतः॥प्रचारः स तु विज्ञेयः सुषुप्तेऽन्योन्य तत्समः॥लीयते हि
सुषुप्तौ तन्निगृहीतं न लीयते॥तदेव निर्भयं ब्रह्म ज्ञानालोकं सम
ंतत इति॥मांडुक्यशाखायामपि श्रूयते॥द्वैतस्याग्रहणं तुल्यमुभ
योः प्राज्ञतुर्ययोः॥बीजनिद्रायुतः प्राज्ञः सा च तुर्ये न विद्यते॥स्व
प्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया॥न निद्रां नैव च स्वप्नं तुर्ये प
श्यंति निश्चिताः॥अन्यथा गृह्णतः स्वप्नो निद्रा तत्त्वमजानतः॥विप
र्यासे तयोः क्षीणे तुरीयं पदमश्नुत इति॥आद्यौ विश्वतैजसौ॥अ
द्वैतस्य वस्तुनोऽन्यथाग्रहणं द्वैतरूपेण प्रतिभासः॥स च विश्वतैज
सयोर्वर्तमानः स्वप्न उच्यते॥तत्त्वस्याज्ञानं निद्रा सा च विश्वतैजस
प्राज्ञेषु वर्तते॥ ॥तयोः स्वप्ननिद्रयोः स्वरूपभूतयोर्विपर्यासो मि
थ्याज्ञानं तस्मिन्विद्यया क्षीणे सति तुरीयपदमद्वैतं वस्त्वश्नुते॥नन्व
स्त्वेवमसंप्रज्ञातसमाधिसुषुप्त्योर्महान्भेदः तत्र तत्त्वविदृष्टो दर्श
नसाधनत्वेन समाध्यपेक्षायामपि दृष्टतत्त्वस्य जीवन्मुक्तस्य नास्ति
तदपेक्षा॥रागद्वेषादिक्लेशाबंधस्य सुषुप्त्यापि निवृत्तेः॥मैवम्॥किं
प्रतिदिनं स्वतः प्राप्ता कादाचित्की सुषुप्तिर्बंधनिवर्तिका॥किं वाभ्या
सेन निरंतरवर्तिनी॥आद्योऽपि किं सुषुप्तिकालीनस्य क्लेशाबंधस्य

निवृत्तिःकिंवाकालांतरवर्त्तिनोनाद्यः॥अप्रसक्तेर्नहिमूढानामपि
सुषुप्तौक्लेशबंधः॥अन्यथायासःप्रसज्येत॥नद्वितीयोसंभवात्न
ह्यन्यकालीनयासुषुप्त्याकालांतरवर्तिनःक्लेशस्यक्षयःसंभवति॥
अन्यथामूढानामपिजागरणस्वप्नयोःक्लेशस्यक्षयःप्रसज्येततनापि
सुषुप्तेनैरंतर्यंअभ्यसितुंशक्यं॥तस्याःकर्मक्षयनिवृत्तत्वात्॥तस्मा
न्नत्त्वविदोपिक्लेशक्षयायास्त्येवासंप्रज्ञातसमाध्यपेक्षा॥तस्यच
समाधेर्गवाश्वादिष्विववाङ्निरोधःप्रथमाभूमिः॥बालकादिष्विवनि
र्मनस्त्वंद्वितीया॥तंद्राभिवाहंकारराहित्यंतृतीया॥सुषुप्ताविवमह
त्तत्वराहित्यंचतुर्थी॥तदेतत्भूमिचतुष्टयमभिप्रेत्यशौनकपरमेष्ठिभ्यामु
क्तं॥अत्रचोपरमेद्धृतिगृहीताबुद्धिःसाधनंमहदहंकारमनोवागा
दीनांस्वतएवतीव्रवेगेनबहिःप्रवहतांकूलंकषायाइवनद्यानिरो
धेधैर्यमहदयेक्षितंबुद्धिर्विवेकःपूर्वभूमिर्जितानवेपिपरीक्ष्यजि
तायामुत्तरभूम्युपक्रमः॥अजितायांतुसैवपुनरभ्यसनीयेतित
दातदाविविच्यात्॥आत्मसंस्थमित्यादिनाराह्वश्लोकेनचतुर्थभू
म्यभ्यासोपिस्मृतः॥गौडपादाचार्याआहुः॥उपायेननिगृह्णीयात्
विक्षिप्तंकामभोगयोः॥सुप्रसन्नंलयेचैवयथाकामोलयस्तथा॥दुः
खंसर्वमनुस्मृत्यकामभोगान्निवर्त्तयेत्॥अजंसर्वमनुस्मृत्यजा
तंनैवतुपश्यति॥लयेसंबोधयेच्चित्तंविक्षिप्तंशमयेत्पुनः॥सक
षायंविजानीयात्समप्राप्तंनचालयेत्॥नास्वादयेत्सुखंतत्रनिःसं
गःप्रज्ञयाभवेत्॥निश्चलंनिश्चरंचित्तमेकीकुर्यात्प्रयत्नतः॥यदान
लीयतेचित्तंनचविक्षिप्यतेपुनः॥अलिंगनमनाभासंनिष्पन्नंब्रह्म
तत्तदेति॥लयविक्षेपकषायसमप्राप्तयश्चतस्रश्चित्तस्यावस्थाः॥
तत्रनिरुध्यमानंचित्तंविषयेभ्योव्यावृत्तंपूर्वाभ्यासवशात्यदिलया
यसुषुप्तयेअभिमुखंभवेत्॥तदानीमुत्थापनप्रयत्नेनलयकारण
निवारणेनवाचित्तंसम्यक्प्रबोधयेत्॥लयहेतवोनिद्राशेषाऽजीर्ण
बह्वशनश्रमाः॥अतएवआहुः॥समाप्यनिद्रांसुजीर्णेल्पभोजीश्र
मत्याज्यबाधेविभक्तप्रदेशेसदासीतनिस्तृष्णएवंप्रयत्नोथवाप्राण
रोधोनिजाभ्यासमार्गादिति॥लयादुत्थापितंचित्तंदैनंदिनप्रबोधा

भ्यासवशात्यदिकामभोगयोर्विक्षिप्येततदाविवेकिजनप्रसिद्ध
भोग्यवस्तुगतसर्वदुःखानुस्मरणेनशास्त्रप्रसिद्धजन्मादिरहिता
द्वितीयब्रह्मतत्त्वानुस्मरणपूर्वकेनभोग्यवस्त्वदर्शनेनचपुनःपु
नर्विक्षेपाच्चित्तंशमयेत्॥कषायस्तीव्रचित्तदोषस्तीव्ररागद्वेषा
दिवासनाग्रस्तंचित्तंकदाचित्समाहितमिवलयविक्षेपरहितंदुः
खैकाग्र्यमवतिष्ठतेतादृशंतच्चित्तंविजानीयात्॥समाहितचित्तात्
पृथक्त्वेनअसमाहितंचित्तंविवेकेनावगच्छेत्॥असमाहितमेतदि
त्यवगम्यलयविक्षेपवत्कषायस्यप्रतीकारंकुर्यात्॥समशब्देन
ब्रह्माभिधीयते॥समंसर्वेषुभूतेषुतिष्ठंतंपरमेश्वरमितिस्मृतेः॥
लयविक्षेपकषायेषुपरिहृतेषुपरिशेषाच्चित्तेनसमंब्रह्मप्राप्यते
॥तच्चसमप्राप्तंचित्तंकषायलयभ्रांत्यानचालयेत्॥सूक्ष्मयाबुध्या
लयकषायप्राप्तीविविच्यतस्यांसमप्राप्तावतिप्रयत्नेनचित्तंस्थापये
त्॥स्थापितेतस्मिन्ब्रह्मस्वरूपभूतःपरमानंदःसम्यगाविर्भवति
॥तथाचोदाहृतं॥सुखमात्यंतिकंयत्तद्बुद्धिग्राह्यमतींद्रियमिति॥
श्रुतिश्चभवति॥समाधिनिर्धूतमलस्यचेतसोनिवेशितस्यात्म
नियत्सुखंभवेत्॥नशक्यतेवर्णयितुंगिरातदास्वयंतदंतःकर
णेनगृह्यत इति॥ननुसमाध्याविर्भूतब्रह्मानंदस्यबुद्धिग्राह्यत्वं
श्रुतिस्मृतिभ्यांअभिहितं॥आचार्यैस्तुनास्वादयेत्सुखंतत्रेतिबु
द्धिग्राह्यत्वंप्रतिषिध्यते॥नायंदोषः॥तत्रनिरोधसुखंबुद्धिग्राह्यं
नप्रतिषिध्यतेकिंतुसमाधिविरोधिनोव्युत्थानरूपस्यपरामर्शस्यै
वप्रतिषेधात्॥यथानिदाघदिवसेषुमध्याह्नेजाह्नवीह्रदनिमग्ने
नानुभूयमानमपिशैत्यसुखंतदावक्तुमशक्यंपश्चादुन्मग्नेना
भिधीयते॥यथावासुषुप्तावविद्यावृत्तिभिःसूक्ष्माभिरनुभूयमान
मपिस्वरूपसुखंतदानींसविकल्पकेनांतःकरणवृत्तिज्ञानेनगृ
हीतुमशक्यंप्रबोधकालेतुस्मृत्याविस्पष्टंपरामृश्यते॥तथास
माधौवृत्तिरहितेनसंस्कारमात्रशेषतयासूक्ष्मेणवाचित्तेनसुखा
नुभवःश्रुतिस्मृत्योर्विवक्षितः॥मद्ददिदंसमाधिसुखमन्वभूवमि
त्येतादृशेनव्युत्थितस्यसविकल्पकःपरामर्शोनास्वादनं॥तदेवा

चार्यैः प्रतिषिध्यते॥ तमेवस्वाभिप्रायंप्रकटयितुंनिःसंगः प्रज्ञया भवेदित्युक्तं॥ प्रज्ञा इंसविकल्पकंज्ञानंप्रज्ञातयासहसंगंपरित्य जेत्॥ यद्वा पूर्वोक्ताध्यात्मिगुहिताबुद्धिः प्रज्ञा तदात्मकेनसाधनेन सुखास्वादनतद्वर्णनादिरूपामासक्तिं वर्जयेत्॥ समाधौब्रह्मानं देनिमग्नंचित्तंयदिकदाचित्सुखास्वादनायचाशीत वालमशकाद्यु पद्रवेणनिश्चरेत्॥ तदानिश्चरत्चित्तंपुनर्निश्चलं यथाभवतित थापरब्रह्मणासहैकीकुर्यात्॥ तत्रचनिरोधप्रयत्नएवसाधनं॥ एकी भावएवयदालीयतेइत्यनेनस्पष्टीक्रियते॥ अलिंगनमनाभास मित्याभ्यांपदाभ्यांकषायसुखास्वादौप्रतिषिध्यते॥ लयविक्षेपक षायसुखास्वादेभ्योरहितंचित्तमविघ्नेनब्रह्मण्यवस्थितंभवति॥ एतदेवाभिप्रेत्यकठवल्लीषुपठ्यते॥ यदापंचावतिष्ठंतेज्ञानानिम नसासह॥ बुद्धिश्चनविचेष्टतितामाहुःपरमांगतिं॥ तांयोगइतिम न्यंतेस्थिरामिंद्रियधारणां॥ अप्रमत्तस्तदाभवतियोगोहिप्रभवा प्ययाविति॥ उपेक्षितोयोगइन्द्रियवृत्तीनांप्रभवंकरोति॥ अनुष्ठित स्तुतासांलयहेतुः॥ अतएवयोगस्यस्वरूपलक्षणंसूत्रयति॥ यो गश्चित्तवृत्तिनिरोधइति॥ वृत्तीनामानंत्यान्निरोधोऽशक्यइतिशं कांवारयितुमियत्तांसूत्रयति॥ वृत्तयःपंचतय्यःक्लिष्टाअक्लिष्टा इति॥ रागद्वेषादिक्लेशरूपाआसुरवृत्तयःक्लिष्टाः॥ रागादिरहिता दैववृत्तयोऽक्लिष्टाः॥ यद्यपिपंचस्वेवक्लिष्टानामपिअंतर्भावस्तथापि क्लिष्टाएवनिरोद्धव्याइतिमंदबुद्धिंवारयितुंताभिःसहाक्लिष्टाउ दाहृताः॥ नामधेयलक्षणाभ्यांवृत्तिविशदयितुंसूत्रद्वयमाह॥ प्र माणविपर्ययविकल्पनिद्रास्मृतयः॥ प्रत्यक्षानुमानागमाःप्रमाणा नि॥ विपर्ययोमिथ्याज्ञानमतद्रूपप्रतिष्ठितं॥ शब्दज्ञानानुपाती वस्तुशून्योविकल्पः॥ अभावप्रत्ययालंबनावृत्तिर्निद्रा॥ अनुभूत विषयस्यासंप्रमोषःस्मृतिरिति॥ वस्त्वभावःप्रतीयतेयस्मिं स्तमस्यावरकेसतितत्तमोऽभावप्रत्ययस्तमोगुणंविषयंकुर्वती वृत्तिर्निद्रेत्युच्यते॥ अनुभूतविषयस्यासंप्रमोषस्तदनुभवजन्यम नुसंधानं॥ पंचविधवृत्तिनिरोधसाधनसूत्रंपठतिअभ्यासवै

राग्याभ्यांतन्निरोधइति॥यथातीव्रवेगोपेतंनदीप्रवाहंसेतुबंधनेन
निर्वार्य्यकुल्याप्रणयनेनक्षेत्राभिमुखंतिर्यक्प्रवाहांतरमुत्पाद्य
ते॥तथावैराग्येणचित्तनद्याविषयप्रवाहंनिर्वार्यसमाध्यभ्यासे
नप्रशांतःप्रवाहःसंपाद्यते॥मंत्रजपदेवताध्यानादीनांक्रियारू
पत्वेनावृत्तिलक्षणोभ्यासःसंभाव्यते॥सर्वव्यापारोपरमरूपस्य
समाधेःकोनामाभ्यासइतिशंकांवारयितुंसूत्रयति॥तत्रस्थितौ
यत्नोभ्यासइति॥स्थितिर्निश्चलस्यनिरोधःयत्नोमानसउत्साहः॥
स्वतएवबहिःप्रवाहशीलंचित्तंसर्वथानिरोधयामीतिएवंवि
धउत्साहः॥आवर्त्यमानोभ्यास इतिउच्यते॥अयमभ्यासइदा
नींप्रवृत्तःस्वयमदृढःसन्अनादिप्रवृत्ताव्युत्थानवासनाःकथम
भिभवेदित्याशंकामपवदितुंसूत्रयति॥सतुदीर्घकालनैरंतर्य्य
सत्कारसेवितोदृढभूमिरिति॥लोकाहिमूढस्यवचनमुदाहरंति
॥विद्यमानाश्चत्वारएववेदास्तानध्येतुंगतस्यमाणवकस्यपंच
दिवसाअतीताअद्याप्यसौनागतइति॥तादृशएवायंयोगीतद्वा
स्याद्यदादिवसैर्वामासैर्वायोगसिद्धिंवांछेत्तस्मात्संवत्सरैर्जन्मभि
र्वादीर्घकालंयोगआसेवितव्यः॥तथाचस्मर्यते॥अनेकजन्मसं
सिद्धस्ततोयातिपरांगतिमिति॥चिरमासेव्यमानोपियदिविच्छिद्य
विच्छिद्यसेव्यते॥तर्हिउत्पद्यमानानांयोगसंस्काराणांसमनंतरभा
विभिर्व्युच्छेदकालीनैर्व्युत्थानसंस्कारैरभिभवेसतिखंडनकारोक्त
न्यायआपतेत्॥अग्रेधावनुपश्चात्लुप्यमानानोविस्मरणशील
श्रुतवत्किमालंबेतेति॥तस्मान्निरंतरमासेवितव्यःसत्कारआदरः॥
अनादरेणसेव्यमानेवसिष्ठोक्तन्यायआपतेत्॥अकर्तृकुर्वदप्ये
तच्चेतश्चेत्क्षीणवासनं॥दूरंगतमनाजंतुःकथासंश्रवणेययेति॥
अनादरोलयविक्षेपकषायसुखास्वादनानामपरिहारः॥तस्मादा
दरेणसेवितव्यः॥दीर्घकालादित्रैविध्येनसेवितस्यसमाधेर्दृढभू
मित्वंनामविषयसुखवासनयादुःखवासनयावाचालयितुंअशक्य
त्वं॥तच्चभगवतादर्शितं॥यंलब्ध्वाचापरंलाभंमन्यतेनाधिकंततः॥
यस्मिन्स्थितोनदुःखेनगुरुणापिविचाल्यतेइति॥अपरलाभस्या

नाधिक्यं कचवृत्तांतेन वसिष्ठ उदाजहार कचः कदाचिदुत्थाय सस
माधेः प्रीतमानसः॥ एकांते सन्नुवाचेदमेवं गद्गदया गिरा॥ किं करोमि
क गच्छामि किं गृह्णामि त्यजामि किं॥ आत्मना पूरितं विश्वं महाकल्पां
बुना यथा॥ सबाह्याभ्यंतरे देहे ह्यधऊर्ध्वं च दिक्षु च॥ इत आत्मा त
थेहात्मा नास्त्यनात्ममयं जगत्॥ न तदस्ति यदत्राहं न तदस्ति न य
न्मयि॥ किमन्यदभिवांछामि सर्वं संविन्मयं ततं॥ स्फारब्रह्मामलां
भोधौ फेनाः सर्वे कुलाचलाः॥ चिदादित्यमहातेजोमृगतृष्णा जगच्छ्रि
य इति॥ गुरुदुःखेनाप्य विचाल्यत्वं शिखिध्वजस्य वत्सरत्रयसमाधि
वृत्तांतेन उदाजहार॥ निर्विकल्पसमाधिस्थं तत्रापश्यन्महीपतिं॥ रा
जानं तावदेतस्माद्बोधयामि परात्पदात्॥ इति संचिंत्य चूडाला सिंहना
दं चकार सा॥ भूयो भूयः प्रभोरग्रे वनेचरभयप्रदं॥ न चचाल तदा राम य
दा नादेन तेन सः॥ भूयो भूयः कृतेनापि तदा सा तं व्यचालयत्॥ चा
लितः पातितोप्येष तदा नो बुबुधे बुध इति॥ प्रल्हादवृत्तांतेनाप्ये
तदेवोदाजहार॥ इति संचिंतयन्नेव प्रल्हादः परवीरहा॥ निर्विक
ल्पपरानंदसमाधिं समुपाययौ॥ निर्विकल्पसमाधिस्थश्चित्रार्पित इ
वाबभौ॥ पंचवर्षसहस्राणि पीनांगो तिष्ठदेकदृक्॥ महात्मन्प्रबु
ध्यस्वेत्येवं विष्णुरुदाहरत्॥ पांचजन्यं प्रदध्मौ च ध्वनयन्ककुभां
गणं दिशां गणं॥ महता तेन शब्देन वैष्णवप्राणजन्मना॥ बभूव सं
प्रबुद्धात्मा दानवेशः शनैः शनैरिति॥ एवं वीतहव्यादीनामपि समा
धिरुदाहरणीयः॥ वैराग्यं द्विविधं॥ अपरं परं चेति॥ यतमानव्यति
रेकैकेंद्रियवशीकारभेदैरपरं चतुर्विधं॥ तत्राद्यं त्रयं अर्थात्स्व
यत्साक्षाच्चतुर्थं सूत्रयति॥ दृष्टानुश्राविकविषयवितृष्णस्य वशी
कारसंज्ञा वैराग्यमिति॥ स्रक्चंदनवनितापुत्रमित्रक्षेत्रधनाद्या
दृष्टा वेदोक्ताः स्वर्गाद्य अनुश्राविकाः॥ तत्रोभयत्र सत्यामपि तृ
ष्णायां विवेकतारतम्येन यतमानादि वैराग्यत्रयं भवति॥ अस्मिन्ज
गति किं सारं किमसारमिति गुरुशास्त्राभ्यां ज्ञास्यामीत्युद्योगे यतमा
नत्वं॥ स्वचित्ते पूर्वं विद्यमानदोषाणां मध्ये अभ्यासमानेन विवेके
न एतावंतो पक्वाः एतावंतोऽवशिष्टा इति विवेचनं व्यतिरेकः॥ दृष्टानु

श्राविकविषयप्रवृत्तेर्दुःखात्मत्वबाधेन तां प्रवृत्तिं परित्यज्य मनस
श्चौत्सुक्यमात्रेण तृष्णावस्थापनं एकेंद्रियत्वं॥ वितृष्णत्वं वशी
कारः॥ तदिदमपरं वैराग्यमष्टांगयोगप्रवर्त्तकत्वेन संप्रज्ञातस्यां
तरंगं॥ असंप्रज्ञातस्य बहिरंगं तस्यांतरंगं परं वैराग्यं सूत्रयति॥
तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यमिति संप्रज्ञातसमाधिपाटवेन
गुणत्रयात्मकात्प्रधानाद्विविक्तस्य पुरुषस्य ख्यातिः साक्षात्कार
उत्पद्यते तस्माच्च साक्षात्कारादशेषगुणत्रयव्यवहारे वैतृष्ण्यं
यत्तत्परं वैराग्यं॥ तस्य तारतम्येन समाधेः शीघ्रत्वतारतम्यं सूत्र
यति॥ तीव्रसंवेगानामासन्नः समाधिलाभ इति॥ संवेगो वैरा
ग्यं तद्भेदात्तु योगिनस्त्रिविधाः॥ मृदुसंवेगा मध्यमसंवेगाः तीव्र
संवेगाश्चेति॥ आसन्नोऽल्पेनैव कालेन समाधिर्लभ्यत इत्यर्थः॥
॥ तीव्रसंवेगेष्वेव समाधितारतम्यं सूत्रयति॥ मृदुमध्यमाधिमात्र
त्वात्ततोऽपि विशेष इति॥ मृदुतीव्रो मध्यतीव्रोऽधिमात्रतीव्र इति॥ तेषू
त्तरोत्तरस्य त्वरया सिद्धिर्द्रष्टव्या॥ उत्तमोत्तमा जनकप्रह्लादादयो
ऽधिमात्रतीव्राः॥ मुहूर्तमात्र विचारेण दृढसमाधिलाभात्॥ अधमा
उद्दालकादयो मृदुसंवेगाश्चिरप्रयासेन तल्लाभात् एवमन्येऽपि यथा
योगमुन्नेयाः तदेवमधिमात्रतीव्रस्य दृढभूमावसंप्रज्ञातसमाधौ
लब्धे सति पुनर्व्युत्थातुमशक्यं सन्मनो न नश्यति मनोनाशेन वास
नाक्षये रक्षिते सति जीवन्मुक्तिः सुप्रतिष्ठिता भवति॥ न च मनोनाशे
विदेहमुक्तिरेव न तु जीवन्मुक्तिः इति शंकनीयम्॥ प्रश्नोत्तराभ्यां त
न्निर्णयात्॥ श्रीरामः॥ विवेकाभ्युदयाच्चित्तस्वरूपे तर्हि ते मुने॥ मै
त्र्यादयो गुणाः कुत्र जायंते योगिनां वद॥ वसिष्ठः॥ द्विविधश्चित्तना
शोऽस्ति सरूपोऽरूप एव च॥ जीवन्मुक्तौ सरूपः स्यादरूपो विदेहमुक्ति
गः॥ प्राकृतं गुणसंभारं ममेति बहु मन्यते॥ सुखदुःखाद्यवष्टब्धं
विद्यमानं मनो विदुः॥ चेतसः कथिता सत्ता मया रघुकुलोद्वह॥ अ
स्य नाशमिदानीं त्वं शृणु प्रश्नविदां वर॥ सुखदुःखदशा धीरं साम्या
न्न प्रोद्धरंति यं॥ निश्वासा इव शैलेंद्रं चित्तं तस्य मृतं विदुः॥ आपत्का
र्पण्यमुत्साहो मदो मांद्यं महोत्सवं॥ यं नयंति न वैरूप्यं तस्य नष्टं मनो

विदुः॥चित्तमाशाभिधानं हि यदा नश्यति राघव॥मैत्र्यादिभिर्गुणैर्युक्तं
तदा सत्त्वमुदेत्यलं॥भूयोजन्मविनिर्मुक्तं जीवन्मुक्तस्य तन्मनः॥स
रूपोसौ मनोनाशो जीवन्मुक्तस्य विद्यते॥अरूपस्तु मनोनाशो यो म
योक्तो रघूद्वह॥विदेहमुक्त एवासौ विद्यते निष्कलात्मकः॥समग्रा
ग्र्यगुणाधारमपि सत्त्वं प्रलीयते॥विदेहमुक्तावमले पदे परमपाव
ने॥संशांतदुःखमजडात्मकमेकरूपमानंदमंथरमपेतरजस्तमो
यत्॥आकाशकोशतनवोऽतनवो महांतस्तस्मिन्पदे गलितदुःख
लवा वसंतीति॥जीवन्मुक्ता न मुह्यंति सुखदुःखरसस्थितौ॥प्राकृ
तेनार्थकारेण किंचित्कुर्वंति वा न वा॥तस्मात्सरूपो मनोनाशो जी
वन्मुक्तिसाधनमिति स्थितं॥ ॥इति श्रीजीवन्मुक्तिसाधनमनोना
शप्रकरणम्॥ ॥केयं जीवन्मुक्तिः किं वा तत्र प्रमाणं॥कथं वा तत्सि
द्धिरित्येतस्य प्रश्नत्रयस्योत्तरं निरूपितम्॥सिद्ध्या वा किं प्रयोजन
मित्यस्य चतुर्थप्रश्नस्योत्तरं इदानीमभिधीयते॥ज्ञानरक्षा तपो वि
संवादाभावदुःखनाशसुखाविर्भावाः पंच प्रयोजनानि॥ननु प्रमा
णोत्पन्नस्य तत्त्वज्ञानस्य को नाम बाधप्रसंगो येन रक्षापेक्ष्येति चेदु
च्यते॥चित्तविश्रांत्यभावे संशयविपर्ययौ प्रसज्जेयातां॥तथा हि
तत्त्वविदो राघवस्य विश्रांतेः पूर्वं संशयं विश्वामित्र उदाजहार॥न रा
घव तवास्त्यन्यत् ज्ञेयं ज्ञानवतां वर॥स्वयैव सूक्ष्मया बुद्ध्या सर्वं वि
ज्ञातवानसि॥भगवद्व्यासपुत्रस्य शुकस्येव मतिस्तव॥विश्रांति
मात्रमेवात्र ज्ञातज्ञेयाऽप्यपेक्षत इति॥शुकस्तु स्वयमेवादौ तत्त्वं वि
दित्वा तत्र संशयानः पितरं पृष्ट्वा पित्रा तथैवानुशिष्टः॥तत्रापि संशया
नो जनकमुपसद्य तेनापि तथैवानुशिष्टस्तं प्रत्येवमुवाच॥श्रीशु
कः॥स्वयमेव मया पूर्वमेव ज्ञातं विवेकतः॥एतदेव च पृष्टेन पित्रा मे
समुदाहृतं॥भवताप्येष एवार्थः कथितो वाग्विदां वर॥एष एव च वा
क्यार्थः शास्त्रेषु परिदृश्यते॥यथायं स्वविकल्पोत्थः स्वविकल्प प
रिक्षयात्॥क्षीयते दग्धसंसार असार इति निश्चितः॥तत्किमेत
न्महाबाहो सत्यं ब्रूहि ममाचलं॥त्वत्तो विश्राममाप्नोति चेतसा भ्रम
ता जगत्॥जनकः॥नातःपरतरः कश्चिन्निश्चयोस्त्यपरो मुने॥स्व

यमेव त्वया ज्ञातं गुरुतश्च पुनः श्रुतं ॥ अस्तु छिन्नश्चिदात्मैकः पु
मानस्मीह नेतरत् ॥ स्वसंकल्पवशाद्बद्धो निःसंकल्पस्तु मुच्यते ॥ तेन त्व
यास्फुटं ज्ञातं तैपं त्वस्य महात्मनः ॥ भोगेभ्यो विरतिर्जाता दृश्याद्वा
सकलादिह ॥ प्राप्तं मान्नव्यमखिलं भवतापूर्णचेतसा ॥ न दृश्ये पतसि ब्र
ह्मन्मुक्तस्त्वं भ्रांतिमुत्सृज ॥ अनुशिष्टः स इत्थं वै जनकेन महात्म
ना विशश्राम शुकस्तूष्णीं स्वस्थे परमवस्तुनि ॥ वीतशोकभयाऽया
सो निरीहश्छिन्नसंशयः ॥ जगाम शिखरं मेरोः समाध्यर्थमनिंदितं ॥
तत्र वर्षसहस्राणि निर्विकल्पसमाधिना ॥ दश स्थित्वा शशामासा
वात्मन्यस्नेहदीपव  दिति ॥ तस्माद्विदितेपि तत्त्वे विश्रांतिरहितशु
क एव वयोरिव संशय उत्पद्यते ॥ सा चाज्ञानमिव मोक्षस्य प्रतिबंध
कः ॥ अत एव भगवतोक्तम् ॥ अज्ञश्चाश्रद्दधानश्च संशयात्मा विन
श्यति ॥ नायं लोकोस्ति न परो न सुखं संशयात्मनः ॥ इति ॥ अथ द्वा
विपर्ययः ॥ स चोत्तरत्रोदाहरिष्यते ॥ अज्ञानविपर्ययौ मोक्षमात्र
विरोधिनौ ॥ संशयस्तु भोगमोक्षयोरुभयोरपि विरोधी ॥ तस्य परस्प
रविरुद्धकोटिद्वयावलंबित्वात् ॥ यदा संसारसुखाय प्रवृत्तिस्तदा मो
क्षमार्गबुद्धिस्तां विरुणद्धि ॥ यदा मोक्षाय प्रवृत्तिस्तदा संसारबुद्धि
स्तां प्रतिबध्नाति ॥ तस्मात्संशयात्मनो न किंचित्सुखमस्तीति मुमु
क्षुणा सर्वथा संशयाच्छेत्तव्याः ॥ अत एव श्रूयते ॥ छिद्यंते सर्वसंशया
इति विपर्ययस्यापि निदाघ उदाहरणं ॥ ऋभुः परमकरुणया निदा
घस्य गृहमेत्य तं बहुधा बोधयित्वा निर्जगाम बुद्धेपि तदुपदिष्टवस्तु
नि श्रद्दधानो निदाघः कर्माणि परमपुरुषार्थहेतुरिति विपर्ययं प्राप्य
कर्मानुष्ठाने यथापूर्वं प्रवृत्ते शिष्यस्य परमपुरुषार्थभ्रंशो माभूदि
ति कृपया गुरुः पुनरागत्य बोधयामास ॥ तदापि विपर्ययं न जहौ ॥
तृतीयेन तु बोधनेन विपर्ययं परित्यज्य विश्रांतिमलभत् ॥ संशयविप
र्ययाभ्यामसंभावनाविपरीतभावनारूपाभ्यां तत्त्वज्ञानस्य फलं प्रति
बध्यते ॥ तदुक्तं पराशरेण ॥ मणिमंत्रौषधैर्वह्निः सुदीप्तोपि यथेंध
नं ॥ प्रदग्धुं नैव शक्तः स्यात्प्रतिबद्धस्तथैव च ॥ ज्ञानाग्निरपि संजातः
सुदीप्तः सुदृढोपि च ॥ प्रदग्धुं नैव शक्तः स्यात्प्रतिबद्धस्तु कल्मषम् ॥

भावनाविपरीतभावनाचासंभावनास्तु क॥कुरुते प्रतिबंधं सा तत्वज्ञानस्य नापरमिति॥तस्मादविश्रांतचित्तस्य संशयविपर्ययप्रसंगेन तत्त्वज्ञानस्य फलप्रतिबंधलक्षणात् बाधाद्भ्रक्षापेक्ष्यते॥विश्रांतचित्तस्य तु मनोनाशेन यद्वा जगदेव प्रविलीयते॥तदा संशयविपर्ययोः कः प्रसंगः॥जगत्प्रतिभासरहितस्य ब्रह्मविदो देहव्यवहारो विनैव प्रयत्नं परमेश्वरप्रेरितेन प्राणवायुना निष्पद्यते॥अत एव बहुंदोगा आमनंति॥नोपजनं स्मरन्निदं शरीरं स यथा प्रयोज्य आचरणे युक्त एवमेवायमस्मिं छरीरे प्राणो युक्त इति उप जनं जनानां समीपे वर्त्तमानमिदं स्वशरीरमिति न स्मरति॥प्रयोज्यः॥रथशकटादिवहने प्रयोक्तुमर्हः॥शिक्षितोऽश्ववलीवर्दादिः स यथा सारथिना मार्गस्याचरणे प्रेरितः पुनःपुनः सारथिप्रयत्नमनपेक्ष्य स्वयमेव रथशकटादिकं पुरोवर्त्तिग्रामं नयति॥एवमेवायं प्राणवायुः परमेश्वरेणास्मिन् शरीरे नियुक्तः सन्नसति वा जीवप्रयत्ने व्यवहारं निर्वहति॥भागवतेपि स्मर्यते देहं च नश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपं॥दैवादुपेतमथ दैववशादपेतं वासो यथा परिकृतं मदिरामदांध इति॥वसिष्ठोप्याह॥पार्श्वस्थबोधिताः संतः पूर्वाचारक्रमागतम्॥आचारमाचरंत्येव सुप्तबुद्धवदुत्थिता इति॥सिद्धो न पश्यति आचरमाचरंत्युभयोः परस्परविरोध इति चेन्न॥विश्रांतितारतम्येन व्यवस्थोपपत्तेः॥तदेव तारतम्यमभिप्रेत्य श्रूयते॥आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठ इति॥अत्र चत्वारः प्रतीयंते ब्रह्मवित्प्रथमः॥ब्रह्मविद्वरो द्वितीयः॥वरीयांस्तृतीयः॥वरिष्ठस्तु तुर्यः॥त एते सप्तसु योगभूमिषु चतुर्थीं योगभूमिमारभ्य क्रमेण भूमिचतुष्टयं प्राप्ता इत्यवगंतव्यं॥भूमयश्च वसिष्ठेन दर्शिताः॥ज्ञानभूमिः शुभेच्छाख्या स्यात् प्रथमा समुदाहृता॥विचारणा द्वितीया स्यात्तृतीया तनुमानसा॥१॥सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका॥पदार्थाभाविनी षष्ठी सप्तमी तुर्यगा स्मृता इति॥२॥स्थितं किं मूढ एवास्मि प्रेक्षेहं शास्त्रसज्जनैः॥वैराग्यपूर्वमिच्छेति शुभेच्छेत्युच्यते बुधैः॥३॥शास्त्रसज्जनसंपर्कवैराग्याभ्यासपूर्वकं॥सद्विचारप्रवृत्तिर्या प्रोच्य

तेसाविचारणा॥४॥विचारणाशुभेच्छाभ्यामिंद्रियार्थेष्वसक्तता॥यत्र
सातनुतामेति प्रोच्यते तनुमानसा॥५॥भूमिकात्रितयाभ्यासाच्चित्तेर्थे
विरतेर्वशात्॥सत्वात्मनि स्थिते शुद्धे सत्त्वापत्तिरुदाहृता॥६॥दशाच
तुष्टयाभ्यासादसंसर्गफलातु या॥रूढसत्त्वचमत्कारप्रोक्ताऽसंसक्ति
नामिका॥७॥भूमिकापंचकाभ्यासात्स्वात्मारामतया भृशं॥आभ्यंतरा
णां बाह्यानां पदार्थानामभासनात्॥परप्रयुक्तेन चिरं प्रयत्नेनावबोध
नं॥पदार्थाभावनीनाम षष्ठी भवति भूमिका॥९॥भूमिषट्कचिराभ्यासा
द्भेदस्यानुपलंभनात्॥यत्स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्यगा गतिरिति
॥१०॥अत्र भूमिकात्रितयं ब्रह्मविद्यायाः साधनमेव न तु विद्या कोटा
वंतर्भवति भेदसत्यत्वबुद्धेरनिवारितत्वात्॥अतएवैतज्जागरणमिति
व्यपदिश्यते॥तदुक्तम्॥भूमिकात्रितयं त्वेतद्राम जाग्रदिति स्थितम्॥
यथावद्भेदबुद्ध्येदं जगज्जाग्रति दृश्यत इति॥चतुर्थभूमौ सर्वं जग
दुपादानस्य ब्रह्मणो वास्तवमद्वितीयसत्तास्वभावं निश्चित्य ब्रह्म
ण्यारोपितयोर्जगच्छब्दाभिधेययोर्नामरूपयोर्मिथ्यात्वमवगच्छति॥
मुमुक्षोः पूर्वोक्तजागरणापेक्षयेयं भूमिः स्वप्नः तदाह॥अद्वैते स्थैर्यमा
याते द्वैते च प्रशमं गते॥पश्यंति स्वप्नवल्लोकं चतुर्थीं भूमिकामिता॥
विच्छिन्नशरदभ्रांशविलयं प्रविलीयते॥सत्त्वेतरं च सन्मात्रं यत्प्र
बोधादुपासते॥योगिनः सर्वभूतेषु सद्रूपान्नोमितं हरिं॥सत्तावशे
षएवास्ते चतुर्थीं भूमिकामित इति॥सोयं चतुर्थीं भूमिं प्राप्तो योगी ब्र
ह्मविदित्युच्यते॥पंचम्यादयस्तिस्रो भूमयो जीवन्मुक्तेरवांतरभेदाः
॥ते च निर्विकल्पसमाध्यभ्यासबलेन विश्रांतितारतम्येन संपद्यंते
पंचमभूमौ निर्विकल्पकात्समाधेस्तदा तदा स्वयमेव व्युत्तिष्ठते॥
सोयं योगी ब्रह्मविद्वरः॥षष्ठभूमौ पार्श्वस्थैर्बोधितो व्युत्तिष्ठति॥सोयं
ब्रह्मविद्वरीयान्॥तदेतद्भूमिद्वयं सुषुप्तिर्गाढसुषुप्तिरभिधीयते
॥तदाह॥पंचमीं भूमिकामेत्य सुषुप्तिपदनामिकां॥शांताशेषांशसुग्धी
मास्तिष्ठस्य द्वैतमात्रके॥अंतर्मुखतया नित्यं बहिर्वृत्तिपरोपि सन्॥प
रिश्रांततया नित्यं निद्रालुरिव लक्ष्यते॥कुर्वन्नभ्यासमेतस्यां भूमिका
यां विवासनः॥षष्ठीं गाढसुषुप्ताख्यां क्रमात्स तति भूमिकां॥यत्रेना

सन्नसद्रुपोनाहं नाप्यन हंकृतिः॥केवलंक्षीणमनसआस्ते द्वैतैक्य
निर्गतः॥अद्वैतंकेचिदिच्छंतिद्वैतमिच्छंतिकेचन॥समंब्रह्मनजानं
तिद्वैताद्वैतविवर्जितं॥अंतःशून्योबहिःशून्यःशून्यकुंभइवांबरे॥अं
तःपूर्णोबहिःपूर्णःपूर्णकुंभइवार्णवे॥गाढंनिर्विकल्पसमाधिंप्राप्त
स्यसंस्कारमात्रशेषस्यचित्तस्यमनोराज्यंकर्तुंबाह्यपदार्थान्ग्रही
तुंवासामर्थ्याभावादाकाशावस्थितकुंभवदंतर्बहिःशून्यत्वं॥स्व
यंप्रकाशसच्चिदानंदैकरसेब्रह्मणिनिमग्नत्वेनसमुद्रमध्यस्थापि
तपूर्णकुंभवदंतर्बहिःपूर्णत्वं॥तुरीयाभिधांसप्तमींभूमिंप्राप्तस्ययो
गिनःस्वतःपरतोवाव्युत्थानमेवनास्तीति॥ईदृशमेवोद्दिश्यदेहंवि
नश्वरमवस्थितमुत्थितंवेत्यादिभागवतवाक्यंप्रवृत्तं॥असंप्रज्ञात
समाधिप्रतिपादकानियोगशास्त्राण्यत्रैवपर्यवसितानि॥सोयमी
दृशोयोगीपूर्वोदाहृतश्रुतौब्रह्मविद्वरिष्ठइत्युच्यते॥तदेवंपार्श्वस्थबो
धितःसिद्धोनपश्यतीत्यनयोर्भूमिद्वयोर्व्यवस्थितत्वान्नकोपिविरोधः
॥पंचम्यादिभूमित्रयरूपायांजीवन्मुक्तौसंपाद्यमानायांद्वैतप्रतिभा
साभावेनसंशयविपर्ययप्रसंगाभावादुत्पन्नंतत्त्वज्ञानंअबाधेनर
क्षितंभवति॥सेयंज्ञानरक्षाजीवन्मुक्तेःप्रथमंप्रयोजनं॥तपोद्विती
यंप्रयोजनम्॥योगभूमीनांदेवत्वादिपदप्राप्तिहेतुत्वात्तपस्त्वंद्र
ष्टव्यंतद्धेतुत्वंचार्जुनभगवतोः श्रीरामवसिष्ठयोश्चप्रश्नोत्तराभ्याम
वगम्यते॥अर्जुनः॥अयतिःश्रद्धयोपेतोयोगाच्चलितमानसः॥अ
प्राप्ययोगसंसिद्धिंकांगतिंकृष्णगच्छति॥कच्चिन्नोभयविभ्रष्टश्छिन्ना
भ्रमिवनश्यति॥अप्रतिष्ठोमहाबाहोविमूढोब्रह्मणपथि॥कृष्णउ॰
पार्थनैवेहनामुत्रविनाशस्तस्यविद्यते॥नहिकल्याणकृत्कश्चिद्दुर्ग
तिंतातगच्छति॥अर्जुनउवाच॥एतन्मेसंशयंकृष्णछेत्तुमर्हस्यशेष
तः॥त्वदन्यःसंशयस्यास्यछेतानह्युपपद्यते॥भगवानउवाच॰॥
प्राप्यपुण्यकृतांलोकानुषित्वाशाश्वतीःसमाः॥शुचीनांश्रीमतांगेहे
योगभ्रष्टोभिजायते॥अथवायोगिनामेवकुलेभवतिधीमताम्॥ए
तद्धिदुर्लभतरंलोकेजन्मयदीदृशं॥तत्रतंबुद्धिसंयोगंलभतेपौर्व
देहिकं॥यततेचततोभूयःसंसिद्धौकुरुनंदनेति॥ श्रीरामः॥एका

मथ द्वितीयां वा तृतीयां भूमिकां सुत ॥ आरूढस्य मृतस्याथ कीदृ
शी भगवन्गतिः ॥ वसिष्ठः ॥ योगभूमिकयोत्क्रांतजीवितस्य शरीरि
णः ॥ भूमिकांशानुसारेण क्षीयते पूर्वदुष्कृतम् ॥ ततः सुरविमानेषु
लोकपालपुरेषु च ॥ मेरूपवनकुंजेषु रमते रमणीसखः ॥ ततः सु
कृतसंभारे दुःकृते च पुराकृते ॥ भोगक्षयपरिक्षीणे जायंते योगि
नो भुवि ॥ शुचीनां श्रीमतां गेहे गुप्ते गुणवतां सतां ॥ तत्र प्राक्भाव
नाभ्यस्तं योगभूमिक्रमं बुधः ॥ दृष्ट्वा परितनात्युच्चैरुत्तमं भूमिका
क्रमं इति ॥ अस्त्वेवं योगभूमीनां देवलोकप्राप्तिहेतुत्वं ॥ तावता त
पस्त्वं कुत इति चेत् श्रुतेरिति ब्रूमः ॥ तथा च तैत्तिरीया आमनंति ॥
तपसा देवा देवतामग्र आयान् तपसर्षयः सुवरन्वविंदन्निति ॥ त
त्त्वज्ञानात्प्राचीनस्य भूमिकात्रयस्य तत्तपस्त्वे सति तत्त्वज्ञानस्यो
त्तरकालीनस्य निर्विकल्पसमाधिरूपस्य पंचम्यादिभूमिकात्रय
स्य तपस्त्वं कैमुत्तिकन्यायसिद्धं ॥ अत एव स्मर्यते ॥ मनसश्चे
न्द्रियाणां च ऐकाग्र्यं परमं तपः ॥ तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर
उच्यत इति । यद्यप्यनेन न्यायेन तपसा प्राप्यं जन्मांतरं नास्ति ॥ त
थापि लोकसंग्रहार्थेदं तप उच्यते ॥ अत एव भगवानाह ॥ लोकसंग्र
हमेवापि संपश्यन्कर्तुमर्हसीति ॥ संग्राह्यश्च लोकस्त्रिविधः ॥ १
शिष्यो भक्तस्तटस्थश्चेति ॥ तत्र शिष्यस्तावत्स्वमुखे योगिनि गुरौ प्रा
माणिकबुद्ध्यातिशयेन तदुपदिष्टे तत्त्वे परमं विश्वासं प्राप्य चित्तं
सहसा विश्राम्यति ॥ अत एव श्रूयते ॥ यस्य देवे परा भक्तिर्यथा
देवे तथा गुरौ ॥ तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मन इति ॥
स्मर्यते च ॥ श्रद्धावान्लभते ज्ञानं तत्परः संयतेंद्रियः ॥ ज्ञानं लब्ध्वा
परां शांतिमचिरेणाधिगच्छतीति ॥ अन्नप्रदाननिवासस्थानक
ल्पनादिना योगिनं सेवमानो भक्तस्तदीयं तपः स्वयमादत्ते ॥ तथा
च श्रूयते ॥ तस्य पुत्रा दायमुपयंति ॥ सुहृदः साधुकृत्यां द्विषंतः
पापकृत्यामिति ॥ तटस्थोपि द्विविधः ॥ आस्तिको नास्तिकश्चेति ॥
तत्रास्तिको योगिनः सन्मार्गाचरणं दृष्ट्वा स्वयमपि सन्मार्गे प्रवर्त
ते ॥ तथा च स्मृतिः ॥ यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ॥ स य

स्प्रमाणंकुरुतेलोकस्तदनुवर्त्तते इति॥नास्तिकोपियोगिनादृष्टः
पापान्मुच्यते।तदुक्तं।यस्यानुभवपर्यंतातत्त्वेबुद्धिःप्रवर्त्तते॥तदृष्टि
गोचराःसर्वेमुच्यंतेसर्वपातकैरिति॥अनेनप्रकारेणसर्वप्राण्यु
पकारित्वंविवक्षित्वापठ्यते॥स्नानंतेनसमस्ततीर्थसलिलेसर्वा
पिदत्ताऽवनिर्यज्ञानांचसहस्रमिष्टमखिलादेवाश्चसंपूजिताः॥सं
साराच्चसमुद्धृताःस्वपितरस्त्रैलोक्यपूज्योप्यसौयस्यब्रह्मविचार
णक्षणमपिस्थैर्यंमनःप्राप्नुयात्॥कुलंपवित्रंजननीकृतार्थाविश्वं
भरापुण्यवतीचतेन॥अपारसंवित्सुखसागरेस्मिंल्लीनंपरेब्रह्म
णियस्यचेतइति॥नकेवलंयोगिनःशास्त्रीयव्यवहारस्यैवतपस्त्वं
किंतुसर्वस्यैवलौकिकव्यवहारस्यापि॥तथाचतैत्तिरीयाःस्वशा
खायामामनंतिमेनानुवाकेनविद्वोधिमहिमानमामनंति॥तस्मिं
श्चानुवाकेपूर्वभागेयोगिनोवयवाययज्ञांगद्रव्यत्वेनाम्नाताः॥तस्यैवं
विदुषोयज्ञस्यात्मायजमानःश्रद्धापत्नीशरीरमिध्ममुरोवेदिर्लो
मानिबर्हिर्वेदःशिखाहृदयंयूपःकामआज्यंमन्युःपशुस्तपोग्निः
दमःशमयितादक्षिणावा ग्घोताप्राणउद्गाताचक्षुरध्वर्युर्मनो
ब्रह्माश्रोत्रमग्निध्रः इति॥अत्रचदानंदक्षिणेतिपदमध्याहा
र्यं॥अथयत्तपोदानमार्जवमहिंसासत्यवचनमितिचास्यदक्षि
णेति छंदोगैराम्नातत्वात्उक्तानुवाकेमध्यभागेनयोगिव्यवहार
स्तज्जीवनकालाश्च ज्योतिष्टोमावयवक्रियारूपत्वेनोत्तरसर्वयज्ञा
वयवक्रियारूपत्वेनचाम्नाताः॥यावद्ध्रियते सादीक्षायदश्नाति।
तद्धविर्यत्पिबतितदस्यसोमपानमितियद्रमतेतदुपसदोयत्संच
रत्युपविशत्युत्तिष्ठतेचसप्रवर्ग्योयन्मुखंतदाहवनीयः याव्याहृ
तिराहुतिर्यदस्यविज्ञानंतज्जुहोतियत्सायंप्रातरत्तितत्समिधंयत्प्रा
नर्मध्यंदिनंसायंचतानिसवनानियेअहोरात्रेतेदर्शपूर्णमासौयेअ
र्धमासाश्चमासाश्चतेचातुर्मास्यानियऋतवस्तेपशुबंधा येसंवत्सरा
श्चपरिवत्सराश्चतेहर्गणाःसर्ववेदसंवाएतत्सत्रंयन्मरणंतदव
भृतइति॰ सर्ववेदसंसर्ववेददक्षिणाकं॥अनेनतच्चरेनप्रकृताहोरात्रा
दिपरिवत्सरांतंसर्वकालसमष्ट्युपलक्षितं॥योगिने आयुर्विवस्ते

यदायुक्तस्तर्वस्वदक्षिणोपेतं सत्रमित्यर्थः॥उत्तरएनुवाके चरम
भागेन सर्वमन्नात्मकं योगिनमुपासीत तस्य क्रममुक्तिरूपं सूर्याचं
द्रमसोः कार्यकारणब्रह्मणोस्तादात्म्यलक्षणं फलमाम्नायते॥ए
तद्वै जरामर्यमग्निहोत्रं सत्रं य एवं विद्वानुदगयने प्रमीयते दे
वानामेव महिमानं गत्वादित्यस्य सायुज्यं सलोकतां गच्छति॥अ
थयो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसः सायु
ज्यं सलोकतामाप्नोति॥एतौ वै सूर्याचंद्रमसोर्महिमानौ ब्राह्मणो
विद्वानभिजयति तस्माद्ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो म
हिमानमित्युपनिषदिति॥जरामरणावधिकं यद्योगिचरितमस्ति
तद्वेदोक्ताग्निहोत्रसंवत्सरसत्रात्मकर्मस्वरूपमित्येवमुपासीनो
भावनातिशयेन सूर्याचंद्रमसोः सायुज्यं तादात्म्यमाप्नोति भावना
मांद्येन समानलोकं प्राप्य तस्मिन्लोके सूर्याचंद्रमसोर्विभूतिमनुभूय
तत ऊर्ध्वं सत्यलोके चतुर्मुखस्य ब्रह्मणो महिमानमाप्नोति॥ तत्रोत्प
न्नतत्त्वज्ञानस्तत ऊर्ध्वं सच्चिदानंदस्वरूपस्य ब्रह्मणो महिमानं कै
वल्यं प्राप्नोति इत्युपनिषदित्यनेन यथोक्तविद्यायास्तत्प्रतिपादक
ग्रंथस्य चोपसंहारः क्रियते॥ तदेवं जीवन्मुक्तेस्तपोरूपं द्वितीयं प्रयो
जनं सिद्धम्॥विसंवादाभावास्तस्याः तृतीयं प्रयोजनम्॥नखल्वंत
र्मुखे वाह्यव्यवहारमपश्यति योगीश्वरे लौकिकस्तैर्थिको वा क
श्चिद्विसंवदते विसंवादो द्विविधः॥कलहरूपो निंदारूपश्च॥तत्र
क्रोधादिरहितेन योगिना सह कथं नाम लौकिकः कलहायते॥इ
तद्वाहिस्यं च स्मर्यते॥क्रुध्यंतं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत्
॥अतिवादांस्तितिक्षेत नावमन्येत कंचनेति॥ननु जीवन्मुक्तेः प्राची
नो विद्वत्संन्यासस्ततो प्राचीनं तत्त्वज्ञानं तस्मादपि प्राचीनो विविदि
षासंन्यासः तत्रैते क्रोधादिराहित्यादयो धर्माः अत्र कथं स्मृताइ
ति चेत्॥ बाढम्॥अत एव जीवन्मुक्तस्य क्रोधादयोघ्नं किंतु मशक्याः
अर्वाचीने पदे विविदिषासंन्यासे यथा क्रोधादयो न संति तथोत्त
मपदे तत्त्वज्ञाने कुतस्तेस्युः॥कुतस्तरां च विद्वत्संन्यासे कुतस्तमां च
जीवन्मुक्तौ अतो योगिना सह न लौकिकस्य कलहः संभवति॥ना

पिनिन्दारूपो विसंवादः प्रांकनीयो निंद्यस्यानिश्चितत्वात्॥तथा च स्मर्यते॥यन्न संतं न चासंतं नाश्रुतं न बहुश्रुतम्॥न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स वै यतिरिति॥सदसल्लेउत्तमाधमज्ञातीति॥तैर्थिकोपि किं शास्त्रप्रमेये विसंवदते किंवा योगिचरिते॥आद्येन ताव द्योगीपरशास्त्रप्रमेयं दूषयति॥तमेवैकं जानथ आत्मानमन्या वाचो विमुंचथेत्यानातुध्यायात्॥बहून्‌शब्दान्‌ वाचो विग्लपनं हि तदित्यादिश्रुत्यनुरोधात्॥नापि स्वशास्त्रप्रमेयं प्रतिवादिनोग्रे समर्थ्यते॥पलालमिव धान्यार्थी त्यजेद्ग्रंथमशेषतः॥परं ब्रह्म विज्ञाय उल्कावत्तान्यथोत्सृजेदित्यादिश्रुत्यर्थपरत्वात्॥यदा प्रतिवादिनमपि स्वात्मतयावीक्षते॥तदा विजिगीषायां का कथा॥नापि लोकायतिकव्यतिरिक्तः सर्वोपि तैर्थिको मोक्षमंगीकुर्वन्॥योगिचरिते पि विसंवदितुमर्हतीति॥आर्हतकापालबौद्धवैशेषिकनैयायिकशैववैष्णवशाक्तसांख्ययोगादिमोक्षशास्त्रेषु प्रतिपाद्यप्रमेयस्य नानाविधत्वेपि मोक्षसाधनस्य यमनियमाद्यष्टांगयोगस्यैकविधत्वात्॥तस्मादविसंवादेन सर्वसंमतो योगीश्वरः एतदेवाभिप्रेत्य वसिष्ठ आह॥यस्येदं जन्म पाश्चात्यं तमाश्वेव महामते॥विशंति विद्या विमला मुक्ता वेणुमिवोत्तमं॥आर्यता हृद्यता मैत्री सौम्यता मुक्तता ज्ञता॥समाश्रयंति तं नित्यमंतःपुरमिवांगनाः॥पेशलाचारमधुरं सर्वे वांछंति तं जनाः॥वेणुं मधुरनिध्वानं वने वनमृगा इव॥सुषुप्तवत्स्वप्रशमितभाववृत्तिना स्थितः सदा जाग्रतियेन चेतसा॥कलान्वितो विधुरिव यः सदा बुधैर्निषेव्यते मुक्त इतीह संस्मृत इति॥मातरीव शमं यांति विषमाणि मृदूनि च॥विश्वासमिह भूतानि सर्वाणि शमशालिनि॥तपस्विषु बहुज्ञेषु याजकेषु नृपेषु च॥बलवत्सु गुणाढ्येषु शमवानेव राजत इति॥तदेवमबाधं जीवन्मुक्ते विसंवादाभावरूपं तृतीयं प्रयोजनं सिद्धं॥दुःखनाशसुखाविर्भावरूपे चतुर्थपंचमे प्रयोजने विद्यानंदनामके ब्रह्मानंदगते चतुर्थाध्याये निरूपिते॥ ॥तदुभयमत्र संक्षिप्योच्यते॥आत्मानं चेद्विजानीयादयमस्मीति पूरुषः॥किमिच्छन्

कस्य कामाय शरीरमनुसंज्वरेदित्यादिश्रुत्या दुःखस्यैहि कस्य विनाश उक्तः॥ एतं ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरवमित्यादिश्रुतयः॥ आमुष्मिक हेतु पुण्यपापचिंतारूपस्य दुःखस्य नाशमाहुः॥ सुखाविर्भावस्त्रेधा॥ सर्वकामावाप्तिः कृतकृत्यत्वं॥ प्राप्तप्राप्तव्यं चेति॥ सर्वकामावाप्तिस्त्रेधा॥ सर्वसाक्षित्वं॥ सर्वत्राकामहतत्वं सर्वभोक्तृरूपत्वं चेति। हिरण्यगर्भादिस्थावरांतेषु देहेष्वनुगतं साक्षिचैतन्यरूपं यत् ब्रह्म तदेवाहमस्मीति जानतः स्वदेह इव परदेहेष्वपि कामसाक्षित्वमस्ति॥ तदेतदभिप्रेत्य श्रूयते॥ सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चितेति॥ लोके मुक्तेषु भोगेषु अकामहतत्वं यत्कामप्राप्तिरित्युच्यते तथा च सर्व भोगदोषदर्शिनस्तत्त्वविदः सर्वत्राकामहतत्वादस्ति सर्वकामावाप्तिः॥ अत एव सार्वभौमोपक्रमेषु हिरण्यगर्भपर्यंतेषु उत्तरोत्तरशतगुणेष्वानन्देषु श्रोत्रियस्य चाकामहतस्येति श्रुतं॥ सद्रूपेण चिद्रूपेणानंदरूपेण सर्वत्र चावस्थितं स्वात्मानमनुसंदधतः सर्वभोक्तृरूपत्वमस्ती सभिप्रेत्यैवं श्रूयते॥ अहमन्नमहमन्नमहमन्नं॥ अहमन्नादोऽहमन्नादोऽहमन्नाद इति॥ कृतकृत्यत्वं तु स्मर्यते॥ ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः॥ नैवास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित्॥ यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः॥ आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यत इति॥ प्राप्तप्राप्यता श्रूयते॥ अभयं वै जनक प्राप्तोसीति॥ तस्मात्तत्सर्वमभवदिति॥ ब्रह्म वेद ब्रह्मैव भवतीति च॥ न चैतौ दुःखविनाशसुखाविर्भावौ तत्त्वज्ञानेनैव सिद्धत्वान्न जीवन्मुक्तिप्रयोजनतामर्हतः॥ मैवं सुरक्षितयोस्तयोरत्र विवक्षितत्वात्॥ यथा तत्त्वज्ञानपूर्वमेवोत्पन्नमपि जीवन्मुक्त्या सुरक्षितं भवति॥ एवमेतावपि सुरक्षितौ भवतः॥ नन्वेवं जीवन्मुक्तेः पंच प्रयोजनत्वे सति समाहितो योगीश्वरो लोकव्यवहारं कुर्वतस्तत्त्वविदोपि श्रेष्ठ इति वक्तव्यम्॥ तद्वरमवसिष्ठयोः प्रश्नोत्तराभ्यां निराकृतं॥ श्रीरामः॥ भगवन्भूतभव्येश कश्चिज्ज्ञातसमाधिकः॥ प्रबुद्ध इव विश्रांतो व्यवहारपरोपि सन्

॥कश्चिदेकांतमाश्रित्यसमाधिनियमेस्थितः॥तयोस्तुकतरःश्रेया
नितिमेभगवन्वद॥वसिष्ठः॥इमंगुणसमाहारमनात्मत्वेनपश्यतः
॥अंतःशीतलतायासौसमाधिरितिकथ्यते॥दृश्यैर्नममसंबंधइ
तिनिश्चित्यशीतलः॥कश्चित्संव्यवहारस्थःकश्चिद्ध्यानपरायणः
॥द्वावेतौपरमसुखदावंतश्चेत्परिशीतलौ॥अंतःशीतलतायस्या
स्तदनंततपःफलमिति॥नैषदोषः॥अत्रवासनाक्षयरूपंअंतः
शीतलत्वंअवश्यंसंपादनीयमित्येतावदेवप्रतिपाद्यते॥नतुतदनं
तर्भाविनोमनोनाशस्यश्रेष्ठत्वंनिवार्यते॥शीतलत्वंतृष्णायाःप्रश
मनमित्येतादृशींविवक्षांस्वयमेवस्पष्टीचकार॥अंतःशीतलता
यांतुलब्धायांशीतलंजगत्॥अंतस्तृष्णोपतप्तानांदावदाहमयंज
गदिति॥ननुसमाधिनिंदाव्यवहारप्रशंसाचात्रोपलभ्यते॥समा
धिस्थानकस्यास्यचेतश्चेद्वृत्तिचंचलं॥तत्तस्यतुसमाधानंयथामत्तनृ
त्तताण्डवैः॥उन्मत्ततांडवस्यास्यचेतश्चेत्क्षीणवासनं॥तत्तस्योन्म
त्तनृत्तंतुसमंब्रह्मसमाधिनेतिमैवम्॥अत्रहिसमाधिप्राशस्त्य
मेवांगीकृत्यवासनानिंद्यते॥इयमत्रवचनव्यक्तिःयद्यपिव्यवहा
रात्समाधिःप्रशस्तस्तथाप्यसौसवासनश्चेत्तदानिर्वासनात्व्य
वहारादधमएवेति॥यदासमाहितव्यवहर्तारावुभावपिअतत्त्व
ज्ञौसवासनौचेत्तदासमाधेरुत्तमलोकप्राप्तिहेतुपुण्यत्वेनप्राश
स्त्यं॥यदातुभौज्ञाननिष्ठौनिर्वासनौच॥तदापिवासनाक्षयरूपंजी
वन्मुक्तिंपरिपालयन्नयंमनोनाशरूपःसमाधिःप्रशस्तएव॥तस्मा
द्योगीश्वरस्यश्रेष्ठत्वात्तत्प्रयोजनोपेतायजीवन्मुक्तेर्नकोपिविघ्न
इतिसिद्धम्॥ ॥इतिजीवन्मुक्तिप्रकरणंस्वरूपप्रमाणसाधनप्रयो
जनैर्जीवन्मुक्तिर्निरूपिता॥ ॥अथतदुपकारिणंविद्वत्संन्यासंनि
रूपयामः॥विद्वत्संन्यासश्चपरमहंसोपनिषदिप्रतिपादितः॥तांचो
पनिषदमनूद्यव्याख्यास्यामः॥तत्रादौविद्वत्संन्यासयोग्यंप्रश्नमव
तारयति॥अथयोगिनांपरमहंसानांकोयंमार्गस्तेषांकास्थितिरिति
नारदोभगवंतमुपगत्योवाचेति॥यद्यप्ययमथशब्दापेक्षितआनंतर्य
प्रतियोगीनकोप्यत्रप्रतिभाति॥तथापिप्रष्टव्योत्रविद्वत्संन्यासः॥

॥अस्मिंश्च विदिततत्त्वो लोकव्यवहारैर्विक्षिप्यमाणो मनोविश्रां-
तिं कामयमानोधिकारी तत्ताहगधिकारसंपत्त्यानंतर्य्यमयश्र-
ब्दार्थः॥ केवलयोगिनं केवलपरमहंसं च वारयितुं पदद्वयमुक्तम्॥
केवलयोगी तत्त्वज्ञानाभावेन त्रिकालज्ञानाकाशगमनादिषु यो-
गैश्वर्यचमत्कारेष्वासक्तः संयमविशेषैस्तत्रोपयुक्ते ततः परमपु-
रुषार्थाद्भ्रष्टो भवति॥ अस्मिन्नर्थे सूत्रम्॥ पूर्वमेवोदाहृतम्॥ ते स-
माधावुपसर्गा व्युत्थाने सिद्धय इति॥ केवलपरमहंसस्तु तत्त्ववि-
वेकेनैश्वर्ये असारतां बुध्वा विरज्यति॥ तदप्युदाहृतं॥ चिदात्मन
इमा इत्थं प्रस्फुरंतीह शक्तयः॥ इत्यस्याश्चर्यजालेषु नाभ्युदेति कुतू-
हलमिति॥ विरक्तोप्यसौ ब्रह्मविद्याभरेण विधिनिषेधावुल्लंघयति
॥तदुक्तम्॥ निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेध इति॥
तथा च श्रद्धालवः शिष्टास्तमेवं निंदंति॥ सर्वे ब्रह्म वदिष्यंति संप्राप्ते
तु कलौ युगे॥ नानुतिष्ठंति मैत्रेय शिश्नोदरपरायणा॥ इति॥ योगिनि
तु परमहंसे यथोक्तं दोषद्वयं नास्ति॥ अन्योप्यस्यातिशयः प्रश्नोत-
राभ्यां दर्शितः॥ श्रीरामः॥ एवं स्थितेपि भगवन् जीवन्मुक्तस्य सन्म-
ते॥ अपूर्वोतिशयः कोसौ भवत्यात्मविदांवर॥ वसिष्ठः॥ ज्ञस्य क-
स्मिंश्चिदेवांग भवत्यतिशयेन धीः॥ नित्यतृप्तः प्रशांतात्मा स आ-
त्मन्येव तिष्ठति॥ मंत्र सिद्धैस्तपःसिद्धैस्तंत्रसिद्धैश्च भूरिशः॥ कृत-
माकाशयानादि तत्र कास्यादपूर्वता॥ एक एव विशेषोस्य न समो
मूढबुद्धिभिः॥ सर्वत्रास्थापरित्यागान्नीरागममलं मनः॥ एताव-
देव खलु लिंगमलिंगमूर्तेः संशांतसंसृतिचिरभ्रमनिर्वृतस्य॥
तज्ज्ञस्य यन्मदनकोपविषादमोहलोभापदामनुदिनं निपुणंत-
नुत्वमित्यनेनातिशयेनोपेतानां दोषद्वयरहितानां मार्गस्थितीर्व-
क्ष्यते॥ वेषभाषादिरूपो हि व्यवहारो मार्गः चित्तोपरमरूपश्चांत-
रो धर्मः स्थितिः॥ भगवांश्चतुर्मुखो ब्रह्मा यथोक्तं प्रश्नोत्तरमवतार-
यति॥ तं भगवानाहेति वक्ष्यमाणमार्गस्य ह्यतिशयमुत्पादयितु-
मार्गं प्रशंसति॥ सोयं परमहंसानां मार्गो लोके दुर्लभतरो न तु बा-
हुल्यमिति॥ यः एषः सोयमिति योजना॥ अयमित्युत्तरे ग्रंथे च व-

क्ष्यमाणआच्छादनादिस्वशरीरोपभोगेनलोकोपकारेणचनिरपेक्षो
मुख्योमार्गःपरामृश्यते॥तादृशस्यपरमकाष्ठांप्राप्तस्यवैराग्यस्याऽह
श्चरत्वात्तस्यमार्गस्यदुर्लभत्वं॥नचैतावताऽस्यंताभावःशंकनीय
इत्यभिप्रेत्यबाहुल्यमेवप्रतिषेधतिनतुबाहुल्येनइतिवक्तव्येलिं
गव्यत्ययश्छांदसः॥अयंमार्गोदुर्लभतरश्चेत्तर्हितदर्थंप्रयासोनक
र्तव्यः॥तेनप्रयोजनाभावादित्याशंक्याह॥यद्येकोपिभवतिसएव
नित्यपूतस्थःसएववेदपुरुषइतिविदुषोमन्यंतेइति॥मनुष्याणांस
हस्रेषुकश्चिद्यततिसिद्धये॥यततामपिसिद्धानांकश्चिन्मांवेत्तित
त्वतः॥इतिन्यायेनयत्रक्वापियदाकदाचिद्योगीपरमहंसोयदिक
श्चिल्लभ्यते॥तर्हिसएवनित्यपूतस्थोभवति॥नित्यपूतःपरमात्मा॥
यआत्माअपहतपाप्मेतिश्रुतेः॥एवकारेणकेवलयोगीकेवलपर
महंसश्चव्यावर्त्यते॥केवलयोगीनित्यपूतंजानाति॥केवलपरमहं
सोजानन्नपिचित्तविश्रांत्यभावाद्बहिर्मुखोब्रह्मणिनतिष्ठति॰॥
वेदप्रतिपाद्यःपुरुषोवेदपुरुषः॥विदुषोविद्वांसोब्रह्मानुभवचित्त
विश्रांतिप्रतिपादकशास्त्रपरंगताः योगिनःपरमहंसस्यब्रह्मनि
ष्ठत्वंसर्वजनामन्यंते॥यथोक्तविद्वांसस्तुतदप्यसहमानाब्रह्मत्व
मेवमन्यंते॥तथाचस्मर्यते॥दर्शनादर्शनेहित्वास्वयंकेवलरूप
तः॥यस्तिष्ठतिसतुब्रह्मन्ब्रह्मवित्स्वयमिति॥अतोनप्रयोजना
भावःशंकितुमपिशक्यते॥नित्यपूतस्थत्वंवेदपुरुषत्वंचमुख्यतो
विशदयन्नर्थात्कास्थितिरितिप्रश्नोत्तरंसूचयति॥महापुरुषोय
च्चितंतत्सर्वदामप्येवावतिष्ठते॥तस्मादहंचतस्मिन्नेवावस्थीयत
इति॥वैदिकज्ञानकर्माधिकारिषुपुरुषेषुमध्येयोगिनःपरमहंस
स्यासंतमुत्तमत्वान्महापुरुषत्वम्॥सतुमहापुरुषोयच्चितंस्वकीयं
तत्सदामप्येवावस्थापयति॥संसारगोचराणांतदीयचित्तवृत्तीनां
अभ्यासवैराग्याभ्यांनिरुद्धत्वात्अतएवभगवान्प्रजापतिःशा
स्त्रसिद्धंपरमात्मानंस्वानुभवेनपरामृशन्मयीतिव्यपदिशति॥
यस्माद्योगीमय्येवचित्तंस्थापयति·तस्मादहमपिपरमात्मस्वरू
पत्वेनतस्मिन्नेवयोगिन्याविर्भूतोवस्थितोस्मि॥नेतरेषुज्ञानि

श्रुतेषामविद्यावत्त्वात्॥तत्त्वविदस्त्वपि अयोगिनो बाह्यचित्तवृ
त्तिभिराहततत्त्वानुसन्धानाविर्भावः॥इदानीं कोयं मार्ग इत्येतं मार्ग
मुपदिशति॥असौ स्वपुत्रमित्रकलत्रबंध्वादीन् शिखां यज्ञोप
वीतं स्वाध्यायं च सर्वकर्माणि संन्यस्यायं ब्रह्मांडं च हित्वा कौपीन
दंडमाच्छादनं च स्वशरीरोपभोगार्थाय च लोकस्योपकारार्थाय च
परिग्रहेदिति॥योग्रहस्थः पूर्वजन्मसंचितपुण्यपुंजे परिपक्वे सति
मातृपितृभ्रात्रादिनानिमित्तेन विविदिषासंन्यासरूपं परमहंसा
श्रममस्वीकृत्यैव श्रवणादिसाधनान्यनुष्ठाय तत्त्वं सम्यगवबु
ध्य॥ततो गार्हस्थ्य प्राप्ते लौकिकवैदिकव्यवहारसहस्रैर्विक्षिप्ते
विक्षिप्ते सति विश्रांतिसिद्ध्ये विद्वत्संन्यासं चिकीर्षति॥तंप्रति
स्वपुत्रमित्रेत्याद्युपदेशः॥पूर्वमेव विविदिषासंन्यासं कृत्वा तत्त्वं
विदितवतो विद्वत्संन्यासं चिकीर्षोः कलत्रपुत्रादिप्रसंगाभावात्
॥नन्वयं विद्वत्संन्यासः किमितरसंन्यासवत्प्रैषोच्चारणादिवि
ध्युक्तप्रकारेण संपादनीयः॥किंवा जीर्णवस्त्रसोपद्रवग्रामत्याग
वल्लौकिकत्यागमात्ररूपः॥नाद्यः॥तत्त्वविदः कर्तृत्वराहित्येन
विधिनिषेधानधिकारात्॥अत एव स्मर्यते ज्ञानामृतेन तृप्त
स्य कृतकृत्यस्य योगिनः॥नैवास्ति किंचित्कर्तव्यमस्ति चेन्न स
तत्त्ववित्॥न द्वितीयः॥कौपीनदंडाद्याश्रमलिंगविधानश्रव
णात्॥नैष दोषः॥प्रतिपत्तिकर्मवदुभयरूपत्वोपपत्तेः॥ज्यो
तिष्टोमे दीक्षितस्य दीक्षांगनियमानुष्ठानकाले कंडूयितुं हस्तं
प्रतिषिध्य कृष्णविषाणा विहितापद्स्तेन कंडूयेत्तथा मनं
भावुकाः प्रजाः स्युरितिश्रुतेः य एतन्नग्नं भावुका इति कृष्णविषा
णया कंडूयनं इति च तस्याश्च कृष्णविषाणायाः समाप्ते नियमे
प्रयोजनाभावाद्दोढुमशक्यत्वाच्च त्यागः स्वत एव प्राप्तः तं च त्या
गं सप्रकारं वेदो विदधाति॥नीतासु दक्षिणासु चात्वाले कृष्ण
विषाणं प्रास्यतीति॥तदिदं प्रतिपत्तिकर्म लौकिकं वैदिकं च
त्युभयरूपं॥एवं विद्वत्संन्यासोप्युभयरूपः॥न च तत्त्ववि
दः कर्तृत्वस्यात्यंताभावः शंकनीयः चिदात्मन्यारोपितस्य कर्तृत्व

स्यविद्ययाऽपोहितत्वेपिचितिच्छायोपेतेंतःकरणोपाधौविज्ञि-
ष्यासहस्रयुक्तेस्वतःसिद्धस्यकर्तृत्वस्यपावकद्रव्यभावितया।
अनपोहितत्वात्।नचज्ञानामृतेनेत्यादिस्मृतिविरोधःसत्यपि
ज्ञानेविश्रांतिरहितस्यतत्त्वाभावेनविश्रांतिसंपादनलक्षणक-
र्तव्यशेषसद्भावेनकृतकृत्यताऽभावात्।ननुतत्त्वविदोविध्यंगीका-
रेसतितेनापूर्वेणदेहांतरमारभेत्।।मैवम्।।तस्यापूर्वस्यचित्तवि-
श्रांतिप्रतिबंधवारणस्यदृष्टफलस्यसंभवेसतिअदृष्टफलक-
ल्पनायाऽन्याय्यत्वात्।।अन्यथाश्रवणादिविधिष्वपिब्रह्मज्ञानो-
त्पत्तिप्रतिबंध निवारणरूपंदृष्टफलमुपेक्ष्यजन्मांतरहेतुत्वं
कल्प्येत्।।तस्माद्विध्यंगीकारेदोषाभावाद्विविदिषुरिवविद्वानपिगृ-
हस्थोनांदीमुखश्राद्धोपवासजागरणादिविधिमनुसृत्यैवसंन्य-
सेत्।।यद्यप्यत्रश्राद्धादिकंनोपदिष्टं,तथाप्यस्यविद्वत्संन्यास-
स्यविविदिषासंन्यासविकृतित्वात्।।प्रकृतिवद्विकृतिःकर्तव्येति
न्यायेनतदीयाधर्म्माःसर्वेप्यत्रप्राप्नुवंति।।यथाग्निष्टोमस्यवि-
कृतिषुतिरात्रादिषुतदीयधर्म्मप्राप्तिस्तद्वत्।।तस्माद्विद्वत्संन्या-
सवदत्रापिप्रैषमंत्रेणपुत्रमित्रादित्यागंसंकल्पयेत्।।बंध्वादी-
नित्यादिशब्देनभृत्यपशुगृहक्षेत्रादिलौकिकपरिग्रहादिवि-
शेषाःसंगृह्यंते।।स्वाध्यायंचेतिचकारेणतदर्थनिर्णयोपयुक्ता-
निपदवाक्यप्रमाणशास्त्राणिवेदोपबृंहकाणिइतिहासपुराणा-
निसमुच्चिनोति।।औत्सुक्यनिवृत्तिमात्रप्रयोजनानांकाव्यनाटका-
दीनांत्यागःकैमुतिकन्यायसिद्धः।।सर्वकर्म्माणीतिसर्वशब्देनलौ-
किकवैदिकनित्यनैमित्तिकनिषिद्धकाम्यानिसंगृह्यंते।।पुत्रादित्या-
गेनैहिकभोगःपरिहृतः।।सर्वकर्मत्यागेनचामुष्मिकभोगाशाचित्त-
विक्षेपकारिणीपरिहृता।।अयमितिछांदसविभक्तिव्यत्ययेनेदंब्र-
ह्मांडमितियोजनीयं।।ब्रह्मांडत्यागेनामतत्प्राप्तिहेतोर्विराडुपासन-
स्यत्यागः।।ब्रह्मांडंचेतिचकारेणसूत्रात्मप्राप्तिहेतोर्हिरण्यगर्भोपा-
सनस्यतत्त्वज्ञानहेतूनांश्रवणादीनांचसमुच्चयः।।स्वपुत्रादिहिर-
ण्यगर्भोपासनांतमैहिकामुष्मिकंचसर्वमेषमात्रोच्चारणेनपरित्य-

ज्यकौपीनादिकंपरिगृह्णीयात्॥आच्छादनंचेतिचकारेणपादुका
दीनिसमुच्चिनोति॥तथाचस्मृतिः॥कौपीनयुगलंवासःकंथाशीत
निवारणी॥पादुकेचापिगृह्णीयात्कुर्यान्नान्यस्यसंग्रहमिति॥स्व
शरीरभोगोनामकौपीनेनलज्जाव्यावृत्तिः॥दंडेनगोसर्पाद्युप
द्रवपरिहारःआच्छादनेनशीतादिपरिहारः॥चकारात्पादुकाभ्यांउच्छि
ष्टदेशस्पर्शादिपरिहारंसमुच्चिनोति॥लोकस्योपकारोनामदंडादि
लिंगेनैतदीयमुत्तमाश्रमंपरिज्ञायतदुचिताभिवंदनभिक्षाप्रदाना
दिप्रवृत्त्यासुकृतसिद्धिः॥चकाराभ्यामाश्रममर्यादायाःशिष्टाचार
प्राप्तायाःपालनंसमुच्चिनोति॥कौपीनादिपरिग्रहस्यानुकूल्यत्व
मभिप्रेत्यमुख्यत्वंप्रतिषेधति॥तच्चनमुख्यास्तीति॥यत्कौपीनादि
परिग्रहणमस्तितद्व्यस्ययोगिनः॥परमहंसस्यमुख्यःकल्पोनभव
ति॥किंत्वनुकल्पएव॥विविदिषासंन्यासिनस्तुदंडग्रहणंमुख्यमि
तिकृत्वादंडवियोगस्यनिषेधःस्मर्यते॥दंडात्मनोस्तुसंयोगःसर्व
दैवविधीयते॥नदंडेनविनागच्छेदिषुक्षेपत्रयंबुधइति॥प्रायश्चि
त्तमपिदंडनाशेप्राणायामशतंस्मर्यते॥दंडत्यागेशतंचरेदिति॥यो
गिनःपरमहंसस्यमुख्यंकल्पंप्रश्नोत्तराभ्यांदर्शयति॥कोयंमुख्यइति
चेदयंमुख्यो नदंडंनशिखांनयज्ञोपवीतंनाच्छादनंचरतिपरमहं
सइति॥नशिखमितिच्छांदसोलिंगव्यत्ययोनुसंधेयः॥यथाविविदि
षुःपरमहंसःशिखायज्ञोपवीताभ्यांरहितोमुख्यस्तथायोगीदंडा
च्छादनाभ्यांरहितःसन्मुख्योभवति॥दंडस्यवैणवत्वादिलक्षणंआ
च्छादनस्यकंथात्वादिलक्षणंचपरिरक्षितुंदंडादिकंसंपादयितुंर
क्षितुंचचित्तेव्यापृतेसतिचित्तवृत्तिनिरोधलक्षणोयोगोनसिध्ये
दितितच्चनयुक्तं॥नहिवरविघातायकन्योद्वाहइतिन्यायात्॥
आच्छादनाद्यभावेशीतादिबाधायाःकःप्रतीकारइत्याशंक्याह
॥नशीतंनचोष्णंनदुःखंनसुखंनमानावमानेचषडूर्मिवर्जमिति
निरुद्धाशेषचित्तवृत्तेर्योगिनः शीतंनास्ति।तत्प्रतीत्यभावात्
॥यथालीलायामासक्तस्यबालस्यआच्छादनादिरहितस्यहेमंत
शिशिरयोःप्रातःकालेशीतंनास्तितथापरमात्मनिआसक्तस्ययो

गिनः शीताभावः॥ घर्म्मकालेऽष्णाभावश्च तथैवावगंतव्यः॥ वर्षो
भावसमुच्चयार्थश्चकारः॥ शीतोष्णयोरप्रतीतौ तज्जन्ययोः सुख
दुःखयोरभाव उपपन्नः॥ निदाघे शीतं सुखजनकं हेमंते दुःखज
नकं॥ उक्तविपर्यय उष्णे द्रष्टव्यः॥ मानः पुरुषांतरेण संपादितः स
त्कारः॥ अवमानः तिरस्कारः॥ यदा योगिनः स्वात्मव्यतिरिक्तं पुरुषां
तरमेव न प्रतीयते॥ तदा मानावमानौ दूरापेतौ॥ चकारः शत्रु
मित्ररागद्वेषादिद्वंद्वाभावं समुच्चिनोति॥ षडूर्म्मयः क्षुत्पिपासे शो
कमोहौ जरामरणमेव च॥ तेषां त्रयाणां द्वंद्वानां क्रमेण मनोदेहध
र्मत्वादात्मतत्त्वाभिमुखस्य योगिनस्तद्दर्शनं न विरुध्यते॥ ननु अ
स्यैवं समाध्यवस्थायां शीताद्यभावः॥ व्युत्थानदशायां तु निंदाक्ले
शः संसारिणमिवैनं बाधेतैवेत्याशंक्याह॥ निंदागर्वमत्सरदंभदर्पे
च्छाद्वेषसुखदुःखकामक्रोधलोभमोहहर्षासूयाहंकारादींश्च हि
त्वेति॥ विरोधिभिः पुरुषैः स्वस्मिन्नापादिता दोषोक्तिर्निन्दा॥ अन्ये
भ्योधिकोहं चित्तवृत्तिर्गर्वः॥ विद्याधनादिभिः अन्यसदृशो भवामी
ति बुद्धिर्मत्सरः॥ परेषामग्रे जपध्यानादिप्रकटनं दंभः॥ भर्त्सनादिषु
दृढबुद्धिर्दर्पः॥ धनाद्यभिलाष इच्छा॥ शत्रुवधादिषु बुद्धिर्द्वेषः॥
अनुकूलद्रव्यादिलाभेन बुद्धिस्वास्थ्यं सुखं॥ तद्विपर्ययो दुःखम्
योषिताद्यभिलाषः कामः॥ कामितार्थविधानजन्यो बुद्धिक्षोभः क्रोधः
॥ लब्धस्य धनस्य त्यागासहिष्णुत्वं लोभः॥ हितेषु हितबुद्धिरहितेषु
हितबुद्धिर्मोहः॥ चित्तगतसुखाभिव्यंजिका सुखविकाशादिहे
तुर्धीवृत्तिर्हर्षः॥ परकीयगुणेषु दोषत्वारोपणमसूया॥ देहेंद्रिया
दिसंघातेष्वात्मभ्रमोहंकारः आदिशब्देन भोग्यवस्तुषु ममकारस
मीचीनत्वादिबुद्धयो गृह्यंते॥ चकारो यथोक्तनिंदादिविपरीतं सत्का
रादिकं समुच्चिनोति॥ एतान् सर्वान्निंदादीन् हित्वा पूर्वोक्तवासनाक्ष
याभ्यासेन परित्यज्य वर्तेतेति शेषः॥ ननु विद्यमाने स्वदेहे तत्प
रित्यागो न संभवतीत्याशंक्याह॥ स्ववपुः कुणपमिव दृश्यते यतस्त
द्वपुरपध्वस्तं इति॥ पूर्वं यत्स्वकीयं वपुः तदिदानीं योगिना स्वा
त्मचैतन्यात्पृथक्भूतत्वेन कुणपमिवावलोक्यते॥ यथाश्रद्धा

लुःस्पर्शनभीत्याशुचदेहं दूरे स्थितोऽवलोकयति॥ तथाऽसंयोगी
तादात्म्यभ्रांतुस्य भीत्या सावधानो देहं चिदात्मनः सकाशान्निरं
तरं विविनक्ति॥ यतःकारणात्तद्गुर्वाचार्योपदेशागमानुभवैरप
ध्वस्तं चिदात्मनः सकाशान्निराकृतं ततश्चैतन्यनियुक्तस्य देह
स्य शववत्तुल्यतया ह्यमानत्वात्तस्यापि चैतन्ये देहे निंदादिसं
गो घटनइत्यभिप्रायः॥ ननुउत्पन्नो दिग्भ्रमः सूर्योदयदर्शनेन
विनष्टोपि यथा कदाचिदनुवर्त्तते॥ तथा चिदात्मनि देहात्मत्व
संशयाद्यनुवृत्तौ निरादिक्लेशः पुनःपुनः प्रसज्येतेत्याशंक्याह
॥संशयविपरीतमिथ्याज्ञानानां यो हेतुस्तेन नित्यनिवृत्त इति॥
आत्माकर्तृत्वादिधर्मोपेतस्तद्रहितो वेत्यादिकं संशयज्ञानं॥ दे
हादिरूप एव आत्मेति विपरीतज्ञानं एतदुभयं भोक्तृविषयं॥ मिथ्या
ज्ञानं तु भोग्यविषयमत्र विवक्षितं॥ तच्चानेकविधं संकल्पप्रभवा
न्कामानित्यत्रस्पष्टीकृतं॥ तद्धेतुश्चतुर्विधः॥ अनित्याशुचिदुः
खानात्मसु नित्यशुचिसुखात्मख्यातिरविद्येति सूत्रणात्॥ अनि
त्ये गिरिनदीसमुद्रादौ नित्यत्वभ्रां तिरेका अशुचौ पुत्रभार्यादि
शरीरे शुचित्वभ्रांतिर्द्वितीया॥ दुःखे कृषिवाणिज्यादौ सुखत्वभ्रां
तिस्तृतीया॥ गौणमिथ्यात्मनि पुत्रभार्यादौ अन्नमयादिके अना
त्मनि सुख्यात्मभ्रांतिश्चतुर्थी॥ एतेषां संशयादीनां हेतुरद्वितीय
ब्रह्मतत्त्वावरकमज्ञानं तद्वासना च॥ तच्चाज्ञानं योगिनः परमहंस
स्य महावाक्यार्थबोधेन निवृत्तं॥ वासना तु योगाभ्यासेन निवृत्ता॥ नु
उदाहृतायां दिग्भ्रांतावज्ञाने निवृत्तेपि वासनायाः सद्भावाद्यथापूर्वं
भ्रांतिव्यवहारः॥ योगिनस्तु भ्रांतिहेतुद्वयराहित्यात्॥ कुतः संश
याद्यीन्यनुवर्त्तेरन्॥ तमेवमनुवृत्त्यभावमभिप्रेत्य तेन हेतुद्वयेन यो
गी नित्यनिवृत्त इत्युक्तम्॥ तस्यामपि अज्ञानतद्वासनानिवृत्तेः उत्प
त्तौ तस्याः निवृत्तेर्विनाशाभावान्नित्यत्वं द्रष्टव्यम्॥ तन्नित्यत्वे हे
तुमाह॥ तन्नित्यबोध इति॥ सर्वनामत्वात्प्रसिद्धार्थवाचीतच्छ
ब्दोत्र सर्ववेदांतप्रसिद्धं परमात्मानमाचष्टे॥ तस्मिन्परमात्मनि यो
बोधो यस्य योगिनः सोयं तन्नित्यबोधः॥ योगी हि तमेव धीरो वि

ज्ञायप्रज्ञांकुर्वीतेतिश्रुतिमनुसृत्यचित्तविक्षेपानुयोगेनपरिहृत्य
नैरंतर्येणपरमात्मविषयामेवप्रज्ञांकरोति॥अतोबोधस्यनित्य
त्वात् बोधविनाश्ययोरज्ञानतद्ध्वंसनयोर्निवृत्तिर्निःशेषस्यार्थः॥बुध्यमा
नस्यपरमात्मनस्तार्किकेश्वरवत्तटस्थत्वशंकांवारयति॥तत्त्वयमे
वावस्थितिरिति॥यद्वेदांतवेद्यंपरंब्रह्मास्तितत्त्वयमेवनतुस्वस्मा
दन्यदित्येवंनिश्चितस्ययोगिनोवस्थितिर्भवति॥तस्ययोगिनोब्रह्मानु
भवप्रकारंदर्शयति॥तंशांतमचलमद्वयानंदंविज्ञानघनएवा
स्मितदेवममपरमंधामेति॥तमित्यादिपदत्रये द्वितीयाप्रथमा
र्थेद्रष्टव्या॥यःपरमात्माशांतःक्रोधादिविक्षेपरहितः॥अचलःग
मनादिक्रियारहितः॥स्वगतसजातीयविजातीयद्वैतशून्यःसच्चिदा
नंदैकरसोस्तिसएवाहमस्मितदेवब्रह्मतत्त्वंममयोगिनःपरमंधा
मवास्तवस्वरूपं॥नत्वेतत्कर्तृत्वभोक्तृत्वादियुक्तं॥एतस्यमायाक
ल्पितत्वात्॥नन्वात्मनःपरब्रह्मत्वेआनंदावाप्तिरिदानींकुतोनेत्यत्रा
नंदावाप्तिःस्वदृष्टांतमुक्त्वाऽभियुक्तैः॥गवांसर्पिःशरीरस्थंनकरोत्यं
गपोषणं॥तदेवकर्मरचितंपुनस्तस्यैवभेषजम्॥१॥एवंसर्वशरीर
स्थःसर्पिवत्परमेश्वरः॥विनाचोपासनांदेवोनकरोतिहितंनृषुति
॥२॥यदियोगिनःपूर्वाश्रमप्रसिद्धाआचार्यपित्रादयःकर्मिणःश्र
द्धाजडाःशिखायज्ञोपवीतसंध्यावंदनरहितेनपाषंडत्वमारोप्य
व्यामोहयेयुस्तदाव्यामोहनिवृत्तयेयोगिनोवर्तमानंनिश्चयंदर्श
यति॥तदेवशिखाच॥तदेवोपवीतंचपरमात्मात्मनोरेकत्वज्ञानेन
तयोर्भेदएवविभग्नःसासंध्येतियद्वेदांतवेद्यस्यपरब्रह्मणोज्ञानं
तदेवकर्मांगभूतबाह्यशिखायज्ञोपवीतस्थानीयं॥अन्येचमंत्रद्र
व्यलक्षणेकर्मांगभूतेचकारात्समुच्चीयते॥शिखाद्यंगसाध्यैःक
र्मभिरुत्पन्नंयत्स्वर्गादिसुखंतत्सर्वंब्रह्मज्ञानेनैवलभ्यते॥वि
षयानंदस्यसर्वस्यब्रह्मानंदलेशत्वात्॥एतस्यैवानंदस्यान्यानि
भूतानिमात्रामुपजीवंतीतिश्रुतेः॥एतदेवाभिप्रेत्याथर्वणिकाब्रह्मो
पनिषद्यामनंति॥सशिखंवपनंकृत्वाबहिःसूत्रंत्यजेद्बुधः॥यद
क्षरंपरंब्रह्मतत्सूत्रमितिधारयेत्॥सूचनात्सूत्रमित्याहुःसूत्रं।

नामपरंपदम्॥तत्सूत्रंविदितंयेनसविप्रोवेदपारगः॥येनसर्वमि
दंप्रोतंसूत्रेमणिगणाइव॥तत्सूत्रंधारयेद्योगीयोगवित्तत्त्वदर्शि
वान्॥बहिःसूत्रंसजेद्विद्वान्योगमुत्तममाश्रितः॥ब्रह्मभावमिदं
सूत्रंधारयेद्यःसचेतनः॥धारणात्तस्यसूत्रस्यनोच्छिष्टोनाशुचिर्भ
वेत्॥सूत्रमंतर्गतंयेषांज्ञानयज्ञोपवीतिनां॥तेवैसूत्रविदोलोके
तेचयज्ञोपवीतिनः॥ज्ञानशिखिनोज्ञाननिष्ठाज्ञानयज्ञोपवीतिनः
॥ज्ञानमेवपरंतेषांपवित्रंज्ञानमुच्यते॥अग्नेरिवशिखानान्यायस्य
ज्ञानमयीशिखा॥सशिखीत्युच्यतेविद्वान्नेतरेकेशधारिणः॥कर्म
ण्यधिकृतायेतुवैदिकेब्राह्मणादयः॥तेभिर्धार्यमिदंसूत्रंकर्मांगं
तद्धिवैस्मृतं॥शिखाज्ञानमयीयस्योपवीतंचापितन्मयं॥ब्राह्मण्यं
सकलंतस्यइतिब्रह्मविदोविदुः॥इदंयज्ञोपवीतंचपरमंयत्परा
यणं॥विद्वान्यज्ञोपवीतीस्यात्तज्ज्ञास्तंयज्विनंविदुरिति॥तस्माद्योगि
नःशिखायज्ञोपवीतेविद्येते॥तस्यैवसंध्यापिविद्यते॥यःशास्त्र
गम्यःपरमात्मापश्चादहंप्रत्ययगम्योजीवात्मातयोरेकत्वज्ञानेनम
हावाक्यजन्येनभ्रांतिप्रतीतोभेदोविशेषेणभग्नएवपुनर्भ्रांत्यनु
दयोभंगस्यविशेषः॥येयमेकत्वबुद्धिःसेयमुभयोरात्मनोःसंधौ
जायमानत्वात्संध्योच्यते॥अहोरात्रयोःसंधावनुष्ठेयाक्रियायथा
संध्यातद्वत्॥एवंचसतियोगीब्रह्मजडैर्व्यामोहयितुंशक्यः॥
कोयंमार्गइतिप्रश्नस्यासौस्वपुत्रेत्यादिनोत्तरमुक्तंकास्थितिरित्ये
तस्यमहापुरुषइत्यादिनासंक्षिप्योत्तरमुक्तासंशयविपरीतेत्या
दिनातदेवप्रपंच्येदानीमुपसंहरति॥सर्वान्कामान्परित्यज्याऽ
द्वैतेपरमास्थितिरिति॥क्रोधलोभादीनांकामपूर्वकत्वात्का
मपरित्यागेनचित्तदोषाःसर्वेपरित्यज्यंतेए तदेवाभिप्रेत्यवाजस
नेयिभिराम्नातं॥अथोखल्वाहुःकाममयएवायंपुरुषइति॥अ
तोनिष्कामस्ययोगिचित्तस्याद्वैतेनिर्विघ्नास्थितिरुपपद्यते॥ननु
दंडग्रहणविधिवासनोपेताःविविदिषासंन्यासिनोयोगिनंदंड
रहितंपरमहंसंनाभ्युपगच्छंतीत्याशंक्याह॥ज्ञानदंडोधृतोयेन
एकदंडीसउच्यते॥काष्ठदंडोधृतोयेनसर्वाशीज्ञानवर्जितः॥

स्यातिनरकान् घोरान्महारौरवसंज्ञितान्॥ तितिक्षाज्ञानवैराग्यश
मादिगुणवर्जितः॥ भिक्षामात्रेण यो जीवेत्स पापीयतिवृत्तिहा॥ इद
मंतरं ज्ञात्वास्तपरमहंसस्यायमेकदंडः स द्विविधः ज्ञानदंडः का
ष्ठदंडश्चेति यथा त्रिदंडिनो वाग्दंडमनोदंडकायदंडश्चेति त्रैविध्यं
तद्वत्॥ वाग्दंडादयो मनुना स्मर्यंते॥ वाग्दंडोथ मनोदंडः कर्मदंड
स्तथैव च॥ यस्यैते नियतास्तुद्धौ स त्रिदंडीति चोच्यते॥ त्रिदंड
मेतन्निक्षिप्य सर्वभूतेषु मानवः॥ कामक्रोधौ तु संयम्य ततः सि
द्धिं निगच्छतीति॥ तेषां स्वरूपं दक्षः स्मरति॥ वाग्दंडोथ मनोदंडः क
र्मदंडस्तथैव च॥ यस्यैते नियता दंडास्त्रिदंडीति स उच्यते॥ वाग्दं
डे मौनमातिष्ठेत्कर्मदंडे त्वनीहतां॥ मानसस्य तु दंडस्य प्राणाया
मो विधीयतेति॥ कर्मदंडोल्पभोजनमिति स्मृत्यंतरपाठः॥ ईदृशं
त्रिदंडित्वं परमहंसस्याप्यस्ति॥ तदेतदभिप्रेत्य पितामहः स्मर
ति॥ यतिः परमहंसस्तु तुर्याख्यः श्रुतिचोदितः॥ यमैश्च नियमै
र्युक्तो विष्णुरूपी त्रिदंडभृदिति॥ एवं सति मौनादीनां वागादिदम
नहेतुत्वाद्यथा दंडत्वं तथैवाज्ञानतत्कार्यदमनहेतोर्ज्ञानस्य दंड
त्वं॥ अयं ज्ञानदंडो येन परमहंसेन धृतः स एव मुख्य एकदंडी॥
त्युच्यते॥ मानसस्य ज्ञानदंडस्य कदाचित् चित्तविक्षेपेण विस्मृतिः
प्रसज्येतेति तन्निवारणार्थं स्मारकः काष्ठदंडो ध्रियते॥ तदेतत॥
च्छास्त्रार्थरहस्यमबुध्वा वेषमात्रेण पुरुषार्थसिद्धिमभिप्रेत्य का
ष्ठदंडो येन परमहंसेन धृतः स पुरुषो बहुविधसंतापोपेतत्वा
त् घोरान्महारौरवसंज्ञितान्नरकानाप्नोति॥ तत्र हेतुरुच्यते॥
परमहंसवेषं दृष्ट्वा ज्ञानित्वभ्रांत्या सर्वे जनाः स्वस्वगृहे भोजयंति
तं॥ स्वयं च जिह्वालंपटो वर्ज्यावर्ज्यविवेकमकृत्वा सर्वमन्नम॥
श्नातिते न प्रत्यवायं प्राप्नोति अज्ञानी यानि तु नान्नदोषेण म॥
स्करीति॥ चातुर्वर्ण्यं चरेद्भैक्ष्यं इत्यादिस्मृतिवचनानि ज्ञानिविं
षयाणि अयं च ज्ञानवर्जित इति युक्तोस्य नरकः अत एव ज्ञानही
नस्य यतेर्भिक्षानियममाह॥ मनुः ॥ न चोत्पातनिमित्ताभ्यां न न
क्षत्रांगविद्यया॥ नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित्॥

।।एककालंचरेद्भैक्ष्यंनप्रसज्जेतविस्तरे।।भैक्ष्येप्रसक्तोहियतिर्वि
षयेष्वपिसज्जति इति।।ज्ञानाभ्यासिनंप्रतितुएवंस्मर्यते।।एक
वारंद्विवारंवाभुंजीतपरहंसकः।।येनकेनप्रकारेणज्ञानाभ्यासो
भवेत्सदेति।।एवंचसतिज्ञानदंडकाष्ठदंडयोर्यद्बलंउत्तमत्वाध
मत्वरूपंतदिदमवगत्यउत्तमंज्ञानदंडंयेधारयंति।।सएवमुख्यः
परमहंसइत्यभ्युपगंतव्यः।।नन्वस्त्वभिज्ञस्यपरमहंसस्यज्ञानदंड
माभूत्काष्ठदंडनिर्बंधः इतरानुचर्यासर्वाकीदृशीत्याशंक्याह०।।
आशींबरेणनमस्कारेणस्वधाकारेणनिंदानस्तुतिर्यादृच्छिकोभवे
द्भिक्षुर्नावाहनंनविसर्जनंनमंत्रंनध्यानंनोपासीतंवानलक्ष्यंनपृ
थक्नापृथगहंनत्वंनसर्वंचानिकेतस्थितिरेवसभिक्षुःसौवर्णादी
नांनैवपरिग्रहेत्नलोकंनावलोकंचेति।।आशाद्दिशःताएवांबरंव
स्त्रमाच्छादनंयस्यासावाशांबरः।।यत्तुस्मृतिवचनं।।जानोरूर्ध्वम
धोनाभेःपरिधायैकमंबरं।।द्वितीयमुत्तरंवासःपरिधायगृहान
टेदिति।।तदिदमयोगिविषयम्।अतएवपूर्वंतच्चनमुख्योस्तीत्यु
क्तं।।यद्यपिस्मृत्यंतरं।योभवेत्पूर्वसंन्यासीतुल्योवैधर्मतोयदि।।
तस्मैप्रणामःकर्तव्योनेतरायकदाचनेति।।तस्याप्ययोगिविषयत्वा
त्नास्यनमस्कारःकर्तव्योस्ति।।अतएवब्राह्मणलक्षणेनिर्नमस्का
रमस्तुतिभिक्षुराहतं।।गयाप्रयागादिषुमह्वाजाड्यप्राप्तस्वधा
निषिध्यतेपूर्वत्रनिंदागर्वैस्यादिवाक्येनपरकृतयास्वनिंदयाक्ले
शो निवारितः।अत्रतुस्वकर्तृकेअन्यविषयेनिंदास्तुतिर्निषिध्यते
।।यादृच्छिकत्वंनिर्बंधराहित्यं।।नक्वचिदपिव्यवहारेनिर्बंधंकुर्यात्
।।यस्तुदेवपूजायांनिर्बंधःस्मर्यते।।भिक्षाटनंजपःशौचंस्नानंध्या
नंसुरार्चनं।।कर्तव्यानिषडेतानिसर्वथानृपदंडवदिति।।तस्या
प्ययोगिविषयत्वमभिप्रेत्यनावाहनमित्याम्नातं।।सकृत्स्मरणंध्या
नं।।नैरंतर्येणानुस्मरणमुपासनमितितयोर्भेदः।।यथायोगिनस्तु
तिनिंदादिलौकिकव्यवहाराभावःयथावादेवपूजादिधर्मशास्त्र
व्यवहाराभावःतथालक्ष्यत्वालक्ष्यत्वादिज्ञानशास्त्रव्यवहारेपि
नास्ति।।यत्साक्षिचैतन्यमस्तितदिदंतत्त्वमसीतिवाक्येत्वंपदेनल

क्ष्यं देहादिविशिष्टं चैतन्यं लक्ष्यं न भवति॥ किंतु वाच्यम्॥ तच्च वाच्यं तत्पदार्थात् पृथक् लक्ष्यत्वं पृथक् स्वदेहनिष्ठो वाच्योऽर्थो ऽहमिति व्यवहारार्थः॥ परदेहनिष्ठः त्वमिति व्यवहारार्हः लक्ष्यं वाच्यमित्युभयविधचैतन्योपेतमन्यज्जडं जगत्सर्वमिति॥ व्यवहारार्हे ऽस्मिन्सेतादृशो विकल्पो न कोपि योगिनोऽस्ति तदीयचित्तस्य ब्रह्मणि विश्रांतत्वात्॥ अत एव स भिक्षुरनिकेतस्थितिरेव॥ यदि नियतनिवासार्थं कंचिन्मठं संपादयेत् तदानीं तस्मिन्ममत्वे सति तदीयहानिवृद्ध्यो श्चित्तं विक्षिप्येत॥ तदेवाभिप्रेत्य गौडपादाचार्या आहुः॥ निस्तुतिर्निर्नमस्कारो निःस्वधाकार एव च॥ चलाचलनिकेतश्च यतिर्यादृच्छिको भवेदिति॥ यथा मठो न परिग्रहीतव्यः॥ तथा सौवर्णरजतादीनां भिक्षा चमनादिपात्राणामेकमपि न गृह्णीयात् तदाह यमः॥ हिरण्मयानि पात्राणि कृष्णायसमयानि च॥ यतीनां नान्यपात्राणि वर्जयेत्तानि भिक्षुक इति॥ मनुरपि॥ अतैजसानि पात्राणि तस्य स्युर्निर्व्रणानि च॥ तेषां मृद्भिः स्मृतं शौचं चमसानामिवाध्वरे॥ अलाबुदारुपात्रं वा मृन्मयं वैणवं तथा॥ एतानि यतिपात्राणि मनुः स्वायंभुवोऽब्रवीदिति॥ बौधायनोपि॥ स्वयमाहृतपर्णेषु स्वयं शीर्णेषु वा पुनः॥ भुंजीत न वटाश्वत्थकरंजानां च पर्णके॥ आपद्यपि न कांस्येषु मलाशी कांस्यभोजनः॥ सौवर्णे राजते ताम्रे मृण्मये त्रपुसीसयोरिति॥ तथा लौकिकजनं शिष्यवर्गं न गृह्णीयात्॥ तदाह मनुः॥ एक एव चरेन्नित्यं सिद्ध्यर्थमसहायकः॥ सिद्धिमेकस्य पश्यन् हि तं न जहाति न हीयत इति॥ मेधातिथिरपि॥ आसनं पात्रलोपश्च संचयः शिष्यसंग्रहः॥ दिवास्वापो वृथालापो यतेर्बंधकराणि षट्॥ एकाहात्परतो ग्रामे पंचाहात्परतः पुरे॥ वर्षाभ्योऽन्यत्र यत्स्थानमासनं तदुदाहृतम्॥ उक्तालाब्वादिपात्राणामेकस्यापि न संग्रहः॥ भिक्षोर्भैक्ष्यभुजश्चापि पात्रलोपः स उच्यते॥ गृहीतस्य तु दंडादेर्द्वितीयस्य परिग्रहः॥ कालांतरोपभोगार्थं संचयः परिकीर्तितः॥ शुश्रूषालाभपूजार्थं यशोर्थं वा परिग्रहः॥ शिष्याणां न तु कारुण्यात् स ज्ञेयः शिष्यसंग्रहः॥ विद्या दिनं प्रकाशत्वादविद्या रात्रिरुच्यते॥ विद्याभ्यासे प्रमा

दोषः सदिवास्वाप उच्यते॥ आध्यात्मिकां कथां मुक्त्वा भैक्ष्यचर्यां सुरस्मृ
तिं॥ अनुग्रहं प्रश्नं चैव वृथालापः स उच्यते॥ लोकं शिष्यजनरूपं न
गृह्णीयादित्येतावदेव न भवति॥ किंतु तस्य लोकस्यावलोकं दर्शनम
पि न कुर्यात्॥ तस्य बंधहेतुत्वात्॥ न चेत्य नेनान्यदपि स्मृतिनिषि
द्धं न कुर्या दित्यभिप्रेतं॥ तत्र निषिद्धं मेधातिथिर्दर्शयति॥ स्थाव
रं जंगमं बीजं तैजसं विषमायुधं॥ षडेतानि न गृह्णीयाद्यतिर्मूत्रपुरी
षवत्॥ रसायनं क्रियावादं ज्योतिषं क्रयविक्रयम्॥ विविधानि च शि
ल्पानि वर्जयेत्परदारवत् इति॥ योगिनो लौकिकवैदिकव्यवहार
गतानि बाधकानि यानि संति तेषां वर्जनमभिहितं अथ प्रश्नोत्तराभ्यां
असंतबाधकं प्रदर्शयतद्वर्जनमाह॥ आबाधकः क इति चेत्॥ आ
बाधको स्ययं॥ यस्माद्भिक्षुर्हिरण्यं रसेन दृष्टं चेत्स ब्रह्महा भवेत्॥
यस्माद्भिक्षुर्हिरण्यं रसेन स्पृष्टं चेत्स पौल्कसो भवेत्॥ यस्माद्भिक्षुर्हि
रण्यं रसेन ग्राह्यं चेत्स आत्महा भवेत्॥ तस्माद्भिक्षुर्हिरण्यं रसेन न दृ
ष्टं न स्पृष्टं च न ग्राह्यं चेति॥ आकारे भिव्याप्यर्थः॥ आङोभिदर्थोभिव्या
प्ताविर्त्यभिहितत्वात्॥ आबाधकोऽयं न बाधकः तस्य सद्भावं प्रतिज्ञा
य हिरण्यस्य तथाविधबाधकत्वमुच्यते रसेनाभिलाषयुक्तेनादरेण
हिरण्यं यदि दृष्टं स्यात्तदानीं स दृष्टा भिक्षुर्ब्रह्महा भवेत्॥ हिरण्यास
क्त्यातत्संपादनरक्षणयोः सर्वदा मयत मानस्य द्वैपर्यप्रपरिहार
य प्रपंच मिथ्यात्वप्रतिपादकान्वेदांतानुदूषयित्वा तत्सत्यत्वमव
लंबते॥ ततः शास्त्रसिद्धमद्वितीयं ब्रह्म तेन भिक्षुणा हतमिव भवति
तस्मादसौ ब्रह्महा भवेत्॥ तथा च स्मर्यते॥ ब्रह्म नास्तीति यो ब्रूया
त् द्वेष्टि ब्रह्मविदं च यः॥ अभूतब्रह्मवादी च त्रयस्ते ब्रह्मघातका इति
॥ ब्रह्महा स तु विज्ञेयः सर्वधर्मबहिष्कृतः॥ अभिलाषपूर्वकं हिरण्यं
स्पृष्टं चेत् तदा तत्स्पृष्टा भिक्षुः पतितत्वात्पौल्कसो म्लेच्छसदृशो भ
वेत्॥ पातित्यं च स्मर्यते॥ पतत्यसौ ध्रुवं भिक्षुर्यस्य भिक्षोर्द्वयं भवे
त्॥ धीपूर्वं रेतउत्सर्गो द्रव्यसंग्रह एव चेति॥ अभिलाषपुरःसरं हि
रण्यं न ग्राह्यं गृहीतं चेत्तदा स भिक्षुर्देहेंद्रियादिसाक्षिणमसंगं चि
दात्मानं हतवान्भवेत्॥ असंगत्वमप्यो ह्यस्यात्मनो हिरण्यादि द्रव्यं

प्रतिभोक्तृत्वेन प्रतिपन्नत्वात्॥ तस्या अन्यथाप्रतिपत्तेः सर्वपापरूपत्वं स्मर्यते॥ योन्यथा संतमात्मानं योन्यथा प्रतिपद्यते॥ किं तेन न कृतं पापं चोरेणात्मापहारिणेति॥ किंचात्मघातिनः सुखलेशेनापि रहितावहुविधदुःखेनावृताः लोकाः श्रूयंते॥ असुर्या नाम ते लोका अंधेन तमसावृताः॥ तांस्ते प्रेत्याभिगच्छंति ये के चात्महनो जना इति॥ दृष्टं चेत्यनेन चकारेण श्रुतं चेति समुच्चीयते॥ स्पृष्टं चेत्यनेन कथितं चेति समुच्चयः॥ ग्राह्यं चेत्यनेन व्यवहृतं चेति समुच्चयः॥ दर्शनस्पर्शनग्रहणवदभिलाषपूर्वका हिरण्यदृत्तांतश्रवणतद्गुणकथनतदीयक्रयादिव्यवहारा अपि प्रत्यवायहेतव इत्यर्थः॥ यस्मात्साभिलाषहिरण्यदर्शनादयो दोषकारिणस्तस्माद्भिक्षुणा हिरण्यदर्शनादयो वर्जनीया इत्यर्थः॥ हिरण्यवर्जनस्य फलमाह सर्वकामा मनोगताः व्यावर्त्तते दुःखेनोद्विग्नः सुखे निस्पृहः त्यागेरागे सर्वत्र शुभाशुभयोरनभिस्नेहो न हृष्टि॥ न मोदते च सर्वेषामिन्द्रियाणां गतिरुपरमते य आत्मन्येवावस्थीयत इति॥ पुत्रभार्यागृहक्षेत्रादिकामानां सर्वेषां हिरण्यमूलत्वाद्धिरण्ये परित्यक्ते सति ते कामा मनोगताः मनस्यवस्थानाद्या वर्त्तंते॥ व्यावृत्ता भवंति॥ कामनिवृत्तौ सत्यां कर्मप्राप्तयो दुःखसुखयोरुद्वेगस्पृहे न भवतः एतच्च स्थितप्रज्ञप्रस्तावे प्रपंचितं॥ ऐहिकयोः सुखदुःखयोरधिक्षेपकत्वे सत्यामुष्मिकविषयरागेपि त्यागो भवति॥ ऐहिकसुखस्य हासुक्तो हि तद्दृष्टांतेनानुमित आमुष्मिके सुखे रागवान्भवति॥ तस्मादैहिके निस्पृहस्यामुष्मिके रागाभावो युज्यते॥ एवं सति सर्वत्र लोकद्वयेपि यो शुभाशुभावनुकूलप्रतिकूलविषयौ तयोरनभिस्नेहः एतच्च द्वेषरहितस्याप्युपलक्षणम्॥ तादृशो विद्वानशुभकारिणं कंचिदपि पुरुषं न द्वेष्टि॥ शुभकारिणि च मोदं न प्राप्नोति॥ द्वेषमोदरहितोयः पुमानात्मन्येवसर्वदावतिष्ठते ॥६
तस्य सर्वेषामिन्द्रियाणां गतिः प्रवृत्तिरुपरमते॥ इन्द्रियोपरतौ न कदाचिदपि निर्विकल्पकसमाधेर्विघ्नो भवति॥ तेषां का स्थितिरिति प्रश्नस्य संक्षेपविस्तराभ्यामुत्तरं पूर्वमुक्तम्॥ तदेवात्र पु

नरोपिहिरण्यनिषेधप्रसंगेनस्पष्टीकृतं॥अथविद्वत्संन्यासमुपसंहरति॥यत्पूर्णानंदैकबोधस्तद्ब्रह्माहमस्मीतिकृतकृत्योभवतीति॥यत्ब्रह्मवेदांते पूर्णानंदैकबोधः परमात्मेति निरूपितं॥तद्ब्रह्माहमस्मीत्येवं सर्वदानुभवन्नयंयोगीपरमहंसः।कृतकृत्योभवतीति॥तथाचस्मर्यते॥ज्ञानामृतेनतृप्तस्यकृतकृत्यस्ययोगिनः॥नैवास्तिकिंचित्कर्तव्यमस्तिचेन्नसतत्त्वविदिति॥जीवन्मुक्तिविवेकेनबंधंहार्दंनिवारयन्॥पुमर्थमखिलंदेयाद्विद्यातीर्थमहेश्वरः॥ ॥ ॥ ॥इतिश्रीविद्यारण्यविरचितोजीवन्मुक्तिविवेकःसमाप्तः॥ शुभम्भूयात्॥ श्रीरस्तु॥

भेदाभेदौसपदिगलितौपुण्यपापेविशीर्णेमायामोहौक्षयमधिगतौनष्टसंदेहवृत्तिः॥शब्दातीतंत्रिगुणरहितंप्राप्यतत्त्वावबोधंनिस्त्रैगुण्येपथिविचरतांकोविधिःकोनिषेधः॥१॥तीर्थानितोयपूर्णानिदेवान्पाषाणमृण्मयान्॥योगिनोनप्रपद्यन्ते आत्म ज्ञानपरायणाः॥२॥अग्निर्देवोद्विजातीनांमुनीनांहृदिदैवतं॥प्रतिमास्वल्पबुद्धीनांसर्वत्रविदितात्मनां॥३॥सर्वत्रावस्थितंशांतंनप्रपश्येज्जनार्दनं॥ज्ञानचक्षुर्विहीनत्वादंधःसूर्यमिवोदितं॥४॥

॥ ॥वाराणसीप्रसादस्यनियोगेनप्रयत्नतः॥काशीसंस्कृतमुद्रायामङ्कितोयंशिलाक्षरैः॥१॥ श्रीकाशीजीमे ज्ञानवापीके पूर्वफाटकपर श्रीविश्वनाथजीकेपास महाराज शिवलाल दुबेजीके मकानमे काशीसंस्कृत मुद्रायंत्रमे छपी जिनको लेनाहोय उनको इस कार्यके संपादक श्रीबाबू। वाराणसीप्रसादजीके पास चोकचोरी गलीमे भाईप्रतापसिंहजीके दुकानपर मिलेगी॥ ॥सम्वत् १९३७॥ शाके ॥ १८०२ ॥ ॥ शुभंभूयात्॥ ॥ श्रीरस्तु॥



